॥ श्रीः ॥

# अष्टावक्रीयम् ।



र. शेषशास्त्रिणा

विरचितं ।

—:o:—

कुंभघोणस्थेन

रा. गुरुराजाचार्येण

स्वकीय

"श्रीगोपालविलासमुद्राक्षरशालायां"

सम्मुद्य प्रकाशितम्.

———

१९१४.

## आर्याः सचेतसः —

कस्य नाम नज्ञातं यदुत प्राचीनाः कालिदास बाणभट्टप्रभृतय इव अधुनातनाः प्रायेण तथाविधां सचेतस्कतां नैव भजन्ति, नापि कुहाचिच्छक्त्या, कुत्राचित् व्यंग्यमर्यादां पुरस्कृत्य, धर्म्यं पन्थानं निरभिसूयं अनुच्छास्त्रञ्च अवनौ प्रतिष्ठापयितुं, नवा धर्मशिरसो रसान् तदनुगुणया रीत्या सचमत्कारं वर्णयितुं, नैव भाषां पोषयितुञ्च, ईशत इति ।

प्रायेण सेयं भाषाभिवृद्धिः गद्यमयेषु ग्रंथेषु आयतते इति ह स्म वदन्ति विमर्शरसिकाः नव्याः । सांप्रतमेवेदं । नहि छन्दोनुविधायिनीं रीतिं पद्यप्रबन्धेभ्यः अवगच्छन्तः माणवकाः, संभाषणोचितां, विनाश्रमं पदार्थसंबंधं प्रकाशयितुमर्हन्तीं च रीतिं, जानीयुः ॥ अत एव गीर्वाणवाणी, भाषान्तरसजातीयां विवृद्धिं नैवाश्नुत इव प्रतिभाति ॥

सर्वविद्या संवर्धनसमाजोऽपि संस्कृतभाषायां, विशिष्य गद्यमयेषु, प्रबंधेषु प्रकामं प्रीतिं प्रकाशयन् नव्यानां भाषासंवर्धनोपायप्रकारं सूचयतीव । अत एव आङ्गलेयभाषापाण्डित्येन साकं गीर्वाणवाण्यां अन्यादृशीं पाण्डितीं भजन्तः विमर्शनेन, गद्यप्रबंधलेखनेन, दुरूहशास्त्रार्थ संग्रहणेनच, अस्मादृशाननुगृह्णन्ति कतिपये संख्यावंतः ॥

अतोऽयं जनः कैश्चन सुहृत्तमैः महाशयैः **"अष्टावक्रीयनामानि"** आख्याने नियोजितः चिरेण यथामति विलिख्य अनुष्ठित सुहृद्वचनश्चाभूत् ।

**क्वेदमाख्यानलेखनसामर्थ्यं. क्वमेऽल्पाधिषणा ॥**

सोऽयं सौहृद उत्साहः संप्रति अस्य जनस्य तत्सम्मुद्रणकर्माणि महान्तमुद्यममुदपीपदत् । अतः संपन्नार्था प्रवृत्तिरियं भावुकाय कल्पतां

भावुकाश्च परमया कृपया दूरीकृतालस्यया शोधनरीत्याच सावधानं अमुं ग्रन्थं पठनेन समनुगृह्य अज्ञानेन, अनवधानेन, च अमुष्य जातानपभ्रंशान् अवबोध्य सम्याञ्चि सांप्रदायिकलेखनपथे अमुंजनं अस्खलितचारिणं कुर्वन्तु इति —

रसिकजन पदपंकज प्रणयी

**र. शेषशायी**

कोट्टयूर् ,

**कुंभघोणम्.**



॥ श्रीः ॥

# ॥ अष्टावक्रीयम् ॥



**यदीयसूक्तिरस्माकं भद्रकर्मविधायिनी ।**
**शर्मणे जगतां कृष्णस्सजीयात्सूरिसेवितः ॥ ॥ १ ॥**
**तापप्रशमननिरता मधुररसास्वादमत्तकविनिचया ।**
**सूर्याश्रिता जगत्यां जयतु सदा सा सरित्समा वाणी ॥२॥**
**महनीयपादसेवा दूरीकुरुते विषादमह्नाय ।**
**घटयति झटिति वरिष्ठं महिततमं भद्रमुन्नतिं च पराम् ॥ ३ ॥**

अस्ति खलु कौबेर्यां दिशि निखिलभुवनमहोपकारवितरणपटुः सन्तताविर्भूतावश्यायसन्ततिसमधिगतापूर्वसानुधर्मा तरुणतरानोकहनिवहपरिकल्पितप्रान्तभूमिः पवित्रतरकृष्णमृगाध्यासितशाद्वलप्रदेशभूषितः पटुतरनिनदवाचालिताशानामितस्ततस्स्वैरं संचरतां अवधूयमृगराजभयं धाष्ट्र्येन तरुभङ्गप्रवृत्तानां महामात्यैरिव भूभृदन्तस्थितबलविशेषजिज्ञासया नियुज्यमानैरनेकैरनेकपकलभैः परिकलितगोष्ठीरसानां कषायगंधसल्लकीपल्लवावर्जनकुतुकशुण्डादण्डाग्रभागानां वशापरिषत्समाराधनाय तानि तान्यतिगंधभाञ्जि मृदुळतराणि मरीचमनोहररसांतराणि आरण्यकान्योषधिपल्लवानि ससंभ्रममपचिन्वतां निरन्तरमदसलिलप्रसराश्यानगण्डस्थळानां मधुरतरमदजलामोदमेदुरितादिगंतरागतैः आतिथेयाश्रमेष्विव कटप्रदेशेषु नित्यवासलुब्धैराळिकुलैः परिवृतानां दंतिनां निचयैरनुक्रियमाणवर्ष्मप्रमाणः, क्वचिद्दुर्वंशसमुदयसमुद्भूतसमीरसखसमुच्छोषितसुमहाफलावनीरुहषण्डः, क्वचिदनवरतातिशीतळामृतवर्षणपरवलाहकसमुज्जीवितजन्तुजातः, क्वचिन्मृगराजाभिहतदंतावळशिरस्थितमुक्ताफलनिकरपरिपूरितैकपदीकः, क्वचिन्मुनिजनसंवर्ध्यमानैः शिष्यव्रजसमुपानीतयाज्ञियकुशाग्रभक्षणतत्परैः आवर्त्यमान-

रोमन्थपाण्डुरमुखभागैः अपत्यैरिवोटजद्वारं पिधाय वल्कलेष्वासक्तैः स्वैरोत्प्लु-
वनसमुपात्तोत्कंठैः हरिणकिशोरकैरासेव्यमानः प्रत्यहमतैलदीपौषधिविशदी-
कृतसानुतटसमारब्धविद्याधरविविधक्रीडाविशेषशोभितः निखिलभुवनतलाव-
श्यकानर्घरत्नादिदोहनकर्मसमभ्युपगतवत्सभावः राजधानीप्रदेशइव भोगि-
कुलव्याप्ततिर्यक्पथः सुरलोक इव विविधसुरतातिशयावाप्तशोभावितानः त्रि-
लोचन इव त्रिपथगाप्रवाहप्रसाधितमूर्धा तीर्थप्रदेशइव द्विजातिगणालंकृतः
अर्यमेव विकस्वरकमलिनीप्रदर्शितवासनाविशेषः मानदंड इव भुवनाङ्गणस्य
जयपताकेव कलिराजविजयस्य आपण इव मुक्ताफलानां खनिरिव रत्नजाता-
नां अवतरणमार्ग इव साधुधर्मस्य मरुकान्तारमिव दुर्विषयरसस्य आश्रयो
मृगाणां आवसथो हिमानां आश्चर्यभूतो हिमवान्नाम गोत्राधिराजः ॥

यस्तु मनोरमायामुत्पाद्य पार्वतीं खण्डपरशुमभ्यर्हयति स्म प्रदानेन ॥
यश्च भगीरथप्रार्त्थ्यमानो गङ्गां शिरसा धारयन् सागराणाम् अथवा सर्वस्या-
पि जीवलोकस्याभद्रं विद्रावयत्यद्यापि। यश्च निरन्तरवाससमुत्कण्ठपार्वती-
जानिशिरश्चन्द्रचन्द्रिकापूरप्लावनेन निगृहीतान्धतमसप्रवृत्तिः प्रतिष्ठापयति
प्रतिपन्नसमाधीनां पवित्रकर्मणां प्रधानमाचारं । यश्चानितरसाधारणैरवदा-
तैः कर्मभिरवापांशभागितां मखे । यश्च पल्लवितानोकहनिवहश्यामायमा-
नया उभयतटपरिक्षिप्तवेतसीप्रभाविस्तारितनीलावकुण्ठनया कूजत्कारण्डव-
मधुरतरमृदुशब्दया फेनपुञ्जप्रदर्शितप्रत्यभिज्ञोर्मिकया समङ्गानाम्न्याच कु-
टिलगत्या सरिता स्वयमभिसृतो राजते युवराज इवाभिसारिकाभिः । यश्च
मूर्ध्ना हिमस्रुतिमुदुह्य पादभूमिसेवानिरतानां तानितान्यभीष्टानि भोगास्पदा
नि आत्मनैवोपकल्पयन् असामान्यां महोपकारपद्धतिमिव शिक्षयति ॥

तस्यैतस्य नगराजस्य उपकण्ठे अनवरताध्ययनध्वनिविद्राविता
मङ्गलः, अनुकलमधीयमानव्रतविशेषानुष्ठानपण्डितकुलमण्डितः वेदा-
न्तार्थविचारचतुरविद्वज्जनावसथसहस्रवीथीपरिक्षिप्तप्रांतभूमिभागः विष-
यरसलोलुपतानिराकरिष्णुवचनोपन्यास कुशलविशुद्धतर विद्यार्थिनिवहव्या-
ख्यातमहिमा स्वच्छतराच्छोदसरोवरसन्ततसंभूतैरिवामलतोयैः प्रदोष-

समयसमुदितसरसललितपुण्डरीकप्रमीलनैः महितमहाश्वेतायमानकुमुदिनीकुलाकुलैः इन्द्रायुधप्रभाविच्छुरितोपांतभूमिभिः संहृष्यत्कपिञ्जलभरितैः सीमान्तसंभूतैः परोपकृतिबोधनायेव मूर्ध्ना विधृतफलजालैः शीततरच्छायावितरणपटुभिः नाळिकेरतरुप्रच्छन्नप्रान्तकेदारः हरिणगणचर्व्यमाणकुशाग्रमेदुरः पुरःप्रदेशम्, उपागतानामतिथीनां जलाशयेन पाद्यविधिमुपकल्पयन् परिणतफलभरावनम्रैश्शाखिभिस्सन्तर्पितातिथिवर्गः द्वारांगण समुह्यमाननीवारराशिः अतिहृष्टमुनिदारककुल प्रणयपरिकल्पितालवालोदकोपच्छन्दितविहंगमव्यूहः, क्वचिच्छिष्यजनतासमुच्चितानार्द्रारण्यक पावन गोमयपिण्डासितप्राङ्गणः उपरितनवलभीपरिचयसमुत्कण्ठितपारावतकुलकलरवाप्यायितागन्तुककर्णविवरः परिसंख्यात शुष्कसमित्कुशमुष्टिडोलामनोहर नागदन्तयुगलः छादिषेयपलालपुञ्जपिञ्जरभूतोपांगणशोभः सन्निहितहोमधेनुखरपुटोल्लिख्यमानाजिरभूमिः उत्प्लवमानतर्णकगणानुसरणश्रान्तमृगपोतमुखभ्रष्टदर्भांकुराचितः अनवरतानुष्ठीयमानेज्यावृतमैत्रावरुणशस्त्रध्वनिमुखरितः पृषदाज्यहविर्गन्धिपवनपाविताशान्तराळः वेदिकाप्रान्तपरिकलितकमण्डलुपुण्टूपेटिकाचमनीयादिपात्रवर्गः उदयगिरिरिव पतितद्विजराजोदयकारी अन्तरिक्षभाग इव सप्तर्षिकुलमंडितः मानससरोवर इव परमहंसालंकृतः मीमांसान्याय इव विशिष्यकृताधिकरणमालः विनतानन्दन इव अमृताहारापनीतश्रमः जीर्णतरुरिव प्रच्छायप्रदाननिपुणः पलितशिरोभिः पारायणपरायणैः वेदान्तविज्ञानकौतुकिभिः मूर्तैरिवसदाचारैरध्यासिताग्निहोत्रशरणभागः कैश्चित्पठद्भिरन्यैश्चपाठयद्भिः कैश्चित्संदिहानैरपरैश्च निश्चिन्वद्भिः कैश्चित्पूर्वपक्षोपक्षेपकुशलैः अन्यैश्च राद्धांतप्रदर्शकैः कैश्चिद्व्याकृतितंत्रप्रयोजनं विचारयद्भिः अन्यैश्च न्यायीयसंबन्धनिवेशनशिक्षणमारचयद्भिः परैश्चाधिकरणभेदं सप्रकारं सयुक्तिकं च तन्त्रे प्रतिष्ठापयद्भिः कैश्चिदनुष्ठानकुशलैः इतरैरनुष्ठापकैः कैश्चनोर्द्ध्वपुण्ड्रधारिभिः अन्यैश्चभस्मत्रिपुण्ड्रशोभितललाटिकैः सामयाचारकधर्मानुष्ठानपरायणैः छात्रवर्गैरध्यासिततरुमूलः कश्चनाश्रमपरिमंडला रराज ॥

तत्रचाधिगतसकलपरमार्थसारः पवित्रपरिष्कृतपाणिः वासोयज्ञोपवीतालंकृतांसप्रदेशः भस्मत्रिपुण्ड्रप्रसाधितललाटपट्टः काशकुसुमनिकाशपलितशिरोरुहपाशः अहिनिर्मोकपरिलघुम्यामधोवासस्संव्यानाम्यामाहितगार्हस्थ्यशोभः प्रतिदिनानुष्ठितत्रिषवणस्नानेनवा प्रवचनप्राप्तखेदेनवा अभिवृद्धवार्द्धिक्यप्रचारेणवा क्रियासमभिहाराचर्यमाणतपस्संप्राप्ततेजोविशेषेणवा परिकृशमङ्गंदधानः करगृहीताक्षमालः करुणमयतां मधुरापाङ्गवीक्षणेन गभीरतां प्रशान्तपावनस्थित्या सर्वोपास्यतां प्रसन्नवचनेन पांडित्यं पटीयःप्रवचनेन वीतरागितां विषयोपभोगनिन्दनेन धर्मनिष्ठतामनुभावविशेषेण ब्रह्मनिष्ठतां योगाभ्यासेन मिताहारतामंगकार्श्येन च प्रकटयन् नदीप्रवाहइव साधुतीर्थोपजुष्टः नभोविभागइवाश्रितसूर्यालोकः क्षीरसागरइव उद्गतद्विजराजमंडलोऽमृताशयश्च पाताळइव भोगासक्तवाताशनसेव्यमानः पाणिनिसूत्रचयइव विहिततत्तद्धितोपदेशः समुचिताधिकारशोभितश्च सद्धेतुरिव सद्व्याप्तिमहितः असत्प्रतिपक्षश्च वेदान्तविद्योदय इवानन्दमयाधिकरणासक्तचेतनः निरस्तमिथ्यातत्वश्च आकरस्सद्गुणानां अकूपारस्सच्चरितरत्नानां आवसथो विश्वासस्य अमरभवनं आनन्दानुभवचिंतामणीनां उत्पत्तिरिव धर्मस्य उदयगिरिरिव विद्यामिहिरस्य उष्णरश्मिरिव मोहान्धकारस्य अवदातकिरण इव गांभीर्यसागरस्य अनभिभूतो वैमनस्येन आश्रितो दयया आलिंगितो वीतरागितया पतिःऋषिकुलस्य प्रधानोदाहरणं पारलौकिकधर्मस्य परिष्कारः पुराणाचारस्य उद्दालकोनामाऽऽसीदेको महर्षिः ॥

यस्यभार्या अरुन्धतीव वसिष्ठस्य लोपामुद्रेवागस्त्यस्य अनुगुणा अहीनाभक्तिः आतिथेयतादूरीकृतालस्या अभिनवोपचारचतुरा स्मृतिरिव वेदार्थस्य मातेव शिष्यवर्गस्य परिचारिकेवातिथीनां दक्षिणेवाध्वरस्य अधीतिनी पत्नी संयाजमंत्रेषु बद्धश्रद्धा सत्कारेषु अप्रतीपगामिनी भर्तृकोपेषु रतिरिव रूपवैभवेन सीतेव पातिव्रत्येन शबरीव ईश्वरतोषणेन श्रीरिवसौन्दर्येण विनीतिः विनयस्य क्षान्तिःक्षमायाः करुणा कारुण्यस्य प्रसूतिस्त्रिवर्गस्य पताका सतीनां परिचचार नाम्ना कल्याणी ॥

यश्चतस्यां कल्याण्यां शीतांशुमिवक्षीरनिधिः मंदमारुतमिव मलयाचलः मुक्ताफलमिवत्वक्सारः मुक्तिमिवज्ञानोदयः परमापूर्वमिव कर्मजातः भूषणं कुलस्य भीषणं पापानां निष्कोषणमविद्यान्धकारस्य तोषणं विबुधजनानां उपबृंह्मणं ब्रह्माद्वैतभावस्य निराकरणं नीचतमवृत्तीनां उदाहरणं साधुकुलस्य पद्मनाभमिव संप्राप्तकमलाश्लेषं उदयगिरिमिव परमहंसोपसेव्यमानपादं पाश्चात्यसन्ध्यासमयमिवानुरक्तगृहपतिमंडलं पूतञ्च ब्रह्मेवश्रुतिप्रतिपाद्यमानगुणगणं श्वेतकेतुनामानं पुत्रमजीजनत् ॥ यश्चापरित्यक्तशैशवया अक्लिष्टरूपया अनवद्यांगया शोभयेवमणिः शिखयेवदीपः सत्यवतीनाम्न्या एकद्वहायन्या कन्यया भूषितश्च रराज ॥

तस्यचैवंभूतस्य पादमूलमासेव्य बहवस्तांस्तानर्थानवापुरह्वाय ॥ केचन धार्मिकाः धर्ममर्माविधां प्रश्नानानामुचितमुत्तरं प्रतिगृह्य अपरिच्छिन्नमानंदमन्वभूवन् ॥ अन्येचयदीयमनुष्ठानमनुक्षणं पश्यन्तोदुरूहार्थेषुमिथोभिन्नेषुच वैदिकवचस्सुतिष्ठन्ते ॥ अपरेच यदीयसूक्तिसुधामास्वाद्य तृणायापि न मन्यंते स्वभोगान् । किंबहुना समागतास्सर्वेपि समाहितविचित्रशक्तिकाः सारतमार्थनिर्णायकाः सफलविज्ञानसंपदः सातिशयमेव स्वंस्वं वर्गं प्रत्यतिष्ठिपन् पातुकेतरस्मिन्पथि ॥ एवं शिक्षणमाचरतोस्य शक्तिमाधुतां वैदुषीञ्च विश्वत्रविसृत्वरीमुपश्रुत्य विद्याजिघृक्षुतया प्रेर्यमाण इव विमुच्य विषादं विचरन् पदेपदे उद्दालकाश्रममुद्दिश्य पृच्छन् आधाय धैर्यसंपदमस्याश्रमस्योपकण्ठमुपसर्पन् कहोडनामा कश्चनमुनिकुमारकः अनुपनीतः षोडशवर्षदेशीयः अन्तिकस्थवेशन्तस्यावतारतटमधिष्ठाय कृताध्वश्रमविनोदनः पयसा परिमार्जन्नङ्गकानि पर्यालुलोचे "क्वमहाप्रभावोमहातपसां श्रेष्ठः परमर्षिरुद्दालकोनाम । क्वचेदमप्राप्तसंस्कारमतिकिल्बिषभाजनं वस्तु । नूनं मयानुष्ठितचराण्यवदातकर्माणि । येन एतदीयसन्दर्शनसुखमनुभाविष्यते । उपासितानिदैवतानि । वन्द्याश्च वन्दिताः । प्रदक्षिणीकृताश्चप्राञ्चः । नह्यकृतसुकृतानामकृष्टपच्यमिव ईदृशंपदमवाप्यते । अत्रस्थित्वा परिचरतः परमर्षिं प्रायेण कलाः प्रादुर्भविष्यंति । जननान्तरीयं खलु कर्म जनयति शुभं जातस्य । श्रूयंतेचैहिकानिकल्याण-

कारणानि यदग्निशुश्रूषणं गुरूपसदनमकश्मलाचारः महतामनुग्रहश्चेति इत्थमाचरितकर्माणः परमुत्कृष्यंते इति आनुभविकश्चासावर्थ इति " चिंतयानस्समुपगतस्य कस्यचिद्बटोर्मुखात् अधिगताश्रमविभागस्सञ्जातहर्षः आत्मनः कृतार्थताम्मन्यमान इव विदितोद्दालकाचार्यावस्थानःप्रह्वः प्रतस्थे ॥ तदनुचभीतभीतइव पदेपदे निक्षिप्यदृष्टिं आधाय शिरस्यञ्जलिम् शिक्षित इव विनयेनमंदमंदंपदमर्पयन् तरुशिखासंबध्यमानाञ्चलानिवल्कलानि वीक्षमाणः कुशाग्रखादनव्यग्राणि मृगयूथानि पश्यन् शुकतुण्डखंडितयवमञ्जरीपुञ्जपिञ्जरितांश्चानोकहाधःप्रदेशानाक्रामन् अरुणकिरणानुरज्यमानकमलमुखीः पद्मिनीः विस्मृतनिमेषेण चक्षुषा विषयीकुर्वन् द्वारोपान्तसंक्षिप्तनीवार निचयमवलोकयन् सायन्तनाग्निहोत्रसमयसंबोध्यमानवैश्वानरागारनिर्गतान् धूमोद्गमानाजिघ्रन् अवगाह्य कक्ष्याविमागमिवसन्निहितमुटजांगणमाससाद ॥

तदन्तश्चाजिरमध्ये नाळिकेरच्छदैर्निवारितोष्णकरोष्णिमनि मंडपे चतुरंगुळवेदिकाचतुरश्रशोभिनः गोमयगोमुखपरिशुद्धस्य रंगवल्लीविततशोभाजुषः प्रापितकुशास्तरणस्य वेदिकातटस्य उपरिविततकृष्णाजिने सन्निहितकमण्डलुनि पुरोनिक्षिप्यमाणताळीपुस्तकशोभिते चासने उपविष्टं शर्मोपदेशशुश्रूषुशिष्यजनतासंसेव्यमानम् अभिनन्द्यमानवचनैरार्यैरुपजुष्टं द्विजराजमिव तारागणानां, गंगाप्रवाहमिव नदीनां हिमालयमिव गिरीणामुदार गात्रमुत्तानचक्षुषमुत्तुंगघोणं उत्फुल्लमुखारविंदं सायन्तनतया समुपह्रियमाण कथमुत्तिष्ठासुं मुनिश्रेष्ठमपश्यत् ॥ सभयमंतिकमुपागतः प्रशांतपावन महनीयदर्शनेनेव जाततुष्टिः बालिश्नाकिञ्चिदिवाहृतधृष्टिः तस्य चोद्दालकाचार्यस्य चरणपरिसरे दण्डवत् प्रणमन् कहोडश्चायंकहोडश्चायमिति आत्मानं निर्दिशन् न विरराम प्रणिपातकरणात् ॥ अलमलमिति आचार्यवचनेन बलात्प्रतिषिध्यमानः तिष्ठन्अविरताश्रुधाराः परिमृज्य पाणिना बाष्पपूरोपरुद्धकण्ठः निहितमूर्धाञ्जलिः सगद्गदमेवमवादीत् "ननुभवंतः समाधिसमधिगतसकलभुवनोदन्ताः । नह्यविदितम् किञ्चिदस्ति भवादृशानां । इमे च विषयाः पुनरुच्यमानाः भजन्त्येव वैरस्यं । तथापि भवादृशेषु

महत्स्वनिवेद्यआत्मीयं विषयं नपारयत्येकोपि सुखितुम् ।। सति च महदाश्रये गौरवमन्यादृशं वस्तूनां । उपला अपिमिहिरकरसंस्पर्शमवाप्य प्रज्वलन्ति महत्या शिखया ।। अनुगृह्यताम् एष क्षणदानेन येनात्मवृत्तं निवेदयिष्यते इति।। तदनु कोदोषः कथ्यतां उदन्तः संक्षेपेण आवश्यकश्चार्थो याच्यतामिति गुरुवचनादिष्टः न्यवेदयत् ।। ब्रह्मसन्ततिरहं काश्यपवंश्यः वियुक्तो मातरपितृभ्यां विषण्णः वेदाध्ययनेच्छुः वीतरागिणां भवतां पादमूलमुपागमम् । विश्वोपकारदक्षेषु गुरुषु निवेदितनिवेदनीयाः सर्वेपि जगति कल्याणभाजो भवंति ।। न ह्यलं लब्धुमाचार्यादन्यमभिमन्ये ।। सिध्यंति खलु प्रार्थिता अर्थास्सतामनुग्रहेण । नजानामि विशिष्य वदितुं । नहि ऋते भवद्भ्यः ममान्यच्छरणं । युष्माकमन्तेवासितया आत्मनः कुशलमाधातुकामोस्मि सर्वधा अहमशक्तोस्मि अगतिरस्मि अतिदुःखितोस्मि अन्धोस्मि अनर्थाकूपारपतितोस्मि ।। इयतः कालस्य नकिमपि पठन् न किंचिदपिविचारयन् नानर्थमुत्पश्यन् न हीनतामात्मनो गणयन् विहारपरायणः तैस्तैः ब्राह्मणब्रुवैः कदर्यजनैश्चाविमुक्तपार्श्वः अपतं महानर्थसागरे ।। एतदुद्धरणे च विना भवदीयमनुग्रह न किञ्चिदुत्प्रेक्षे ।। तत्परिगृह्यतामयं । उपनीयतां औचित्येन ।। नियम्यतां नियोगेषु । मम सवयसश्च संगृहीतसर्वविद्याः सागरा इवाक्षोभ्यहृदयास्संति ललामभूताः कुलस्याश्रमस्यच ।। तेषां दर्शनेन विषीदतिहृदयं । ग्लायन्त्यङ्गानि । शुष्यतिजिह्वा । उद्भ्रमतिदृष्टिः। खिद्यति आत्मा । न प्रसरति पाणिपादं । किं बहुना सुधाशनमपि विषायते ।। हंतहंत ।। अहन्तु दर्पभरेणवा अज्ञानविजृंभणेनवा अपितृकस्वभावतयावा आत्मीयकर्मपरिणामेनवा कालकौटिल्येनवा भवितव्यताप्राबल्येनवा न जाने केन हेतुना एवमवस्थोस्मि संवृत्तः । सदानिन्दंति मातरपितृयोनयः । परिहसंति पामराः । विगर्हयंति विद्वांसः । प्रदूषयंति प्रकृष्टकुलाः विद्रावयंति बन्धुता । विषादयंतिवीतस्पृहामुनयः । परित्यजंतिसनाभयः । बहिष्कुर्वंति ब्रह्मनिष्ठाः। धिक्कुर्वंति धिषणाशालिनः। सत्यंपरितपामि। किमयं कामवादभक्षाचारस्समुचितः कुलस्यवर्णनीयः प्रथमवर्णस्य अभि-

नन्दनीयः आश्रमधर्मस्य प्रसाधनं प्रौढकुलस्य मोदनप्रकारो महितानां । हंत बहुधा गतं वयः नाज्ञानं । पीवरीकृतः कायः नज्ञान संपत्तिः । वीक्षिताः विहरणप्रकाराः । नमोक्षणोपायाः दार्ढ्यमापन्नोभुजदंडः नवाङ्मनसदंडः । सञ्चारितानि वनानि नविद्यागहनानि । धिक्कृताश्च महांतः नरागद्वेषादयः । अलमात्माशोचनीयएवेति व्यवसितः ॥ अतोऽर्हतिरक्षितुमेनं । नान्यथागतिरस्ती" ति क्रियासमभिहारेण प्रणमन् अरुदच्च ॥

श्रुत्वाच विदितधर्मा तत्र भवान् उद्दालकाचार्यः विपुलार्थतया प्रश्न वाक्यस्य सान्निहितकालतयाचानुष्ठानस्य संक्षिप्येत्थमुदतारीत् ॥ आयुष्मन् भद्रमुख, नह्यन्तरेणेश्वरेच्छां तृणमपिचलितुंपारयति ॥ नखलुसंकल्पः पुरुषोत्तमस्यान्यथाभवितुमर्हति ॥ परन्तुप्रयतनाय पामराणां कश्चनपरमार्थ वेदोगुरुस्सेव्यते ॥ सोपानपङ्क्तय इव उन्नतपदप्रेप्सूनां पदन्यासदर्शिन्यः प्रायेण पण्डितानां वाचः ॥ दिष्टानुरोधिनी हि प्रवृत्तिः प्रसरति पुण्यपापयोः ॥ नहि गुरुकुलवासिनस्सर्वेपि भजन्ति समानंफलं । नहि काचमणिस्सुवर्णकारहस्तंगतइतिकामप्यभिख्यामावहति ॥ न कदाचित् वृथा भवेत् गुरूपसदनमितितु न्याय्योवादः ॥ प्रार्थितमर्थमनधिगम्य न धीराविरमंति ॥ इयतः कालस्यानधीतो विद्यायामशिक्षितो व्रतेषु अनुपनीतो गुरुणेति दूयते ॥ नानवाप्य सम्यञ्चं समयमविघ्नेनानुष्ठीयते दैनदिनिकंकर्म । उद्युञ्जानाश्चमनसो दृढप्रवृत्तिमेव समयसंज्ञया व्यवदिशंति ॥ नहीदं संभाव्यते साधु ॥ समये समये सन्धुक्षमाणा अपि प्रक्रान्तकर्माणः नपरिणातिमभीष्टामाप्नुवंति ॥ कालतुलीलया समारब्धारो भजंति शुभोदर्कमेव फलं ॥ श्वस्सर्वं आलोच्यते । शिक्षताञ्च भवान् अनुष्ठातव्यानर्थानंतेवासिभ्यः इति उक्त्वा कहोडञ्चएनं कामचारवादभक्षं भवन्तोह्याय सत्पथाचारं शिक्षयंतु इति निरक्षरमुन्नमितभ्रुणा चक्षुषाऽवगमितार्थेषु जाबालिकर्दमब्रह्मरातकांडदर्शकप्रभृतिषु शिष्यजनेषु ससंभ्रममासनादुत्तस्थौ ॥ सविधोपासनापराश्चवृद्धाः विद्यार्थिनश्च झटितिकटिबद्धोत्तरीयाः साष्टांगं प्रणेमुः ॥ उत्थितश्चायमाचार्यः अधिवृक्षाग्रमर्यमणः करानवलोक्य सायंप्रणयनातिपातभीरुः अगृहीत्वैवकमण्डलुं अपराभृ-

श्यैव पुण्ट्रपेटिकां अविचिन्त्याजिमं अनधिरुह्यैव पादुके अन्तिकस्थितं अकर्दमं आश्रितपापापनोदकमत्यच्छमच्छोदसरस्सदृशं जालाशयमभिगत्याचान्तः सूर्याभिमुखः अघमर्षणीजेपन् अन्तर्जलेममज्ज ॥ जातसंभ्रमश्च कृतस्नानः काण्डदर्शकः स्नानादुत्थितस्य अविळंबमेव शिरोमार्जनशाटीं सव्यानाधोवाससी पुण्ट्रसाधनानि च सभक्तिगौरवं समानीयन्यवेदयत् ॥ धृतपुंड्रश्चाचार्यः पुरतस्संशोध्यनिक्षिप्यमाणे उपानही अधिरुह्य धृतजलकमण्डलुना पुरोगच्छता तेनैव उपदिश्यमानमार्गः चटुलगत्या प्राविशदाश्रमं ॥ प्रविश्यचाचांतः प्रथमतः प्रणीय पावकं तदनुसांध्यमुपासन मुपाश्रयत् पतिव्रतया कल्याण्यान्वास्यमानः परमेष्ठिकल्पोब्रह्मर्षिः ॥ तदनु कृतसायंतनविधिषु द्विजातिषु पश्चिमोदधौ कहोडाचिंतया सहपतिते पतङ्गे रुवत्कोके प्रमीलत्कमले स्फुटत्कुमुदे नश्यद्दृष्टिशक्तौ अङ्कदन्धतमसांकुरे स्फुटेषु तारकेषु कहोडं परिग्राहयितुमिवाचार्योटजांतर्व्यापृतकरे हिमकरे अध्ययनपरेषु वटुषु कृतदेवताराधनः किंचिदिवाभ्यवहार्य अनुष्ठिताचमनः आचार्यः अकठोरवातासेवितं परितो विहृतिपरायणमृगतर्णकमधिष्ठायाङ्गणमध्यं नियुज्यच भोक्तुमंतेवासिनः स्वयमेकाकी अचिंतयत् । "कोसौ कहोडः । य एतावतापि नाश्रावि ॥ अथवा सांप्रतमेवास्यापरिज्ञानं । यतोऽयंमृगधर्मा ॥ कश्यपगोत्र इति तु सांप्रदायिकैः शिक्षितवचःक्रमैराविष्क्रियते एव ॥ परन्तु तस्य अज्ञताऽदुःखातिभूमिं गत इति निश्चप्रचं । दुःखितस्तु तानितानि वदेत् ॥ दर्वीकरदष्टास्तु दारुणमेव औषधमभिकांक्षन्ति ॥ अजानन्नेव शैशवं वयोऽगमयत् ॥ परिणतिविरसतां विहारस्यालोच्यानुभूयाचाद्य उपायमन्वेषते अनतीतोपनयनसमयः समाश्रयदत्रेति तुष्यति हृदयं ॥ इयत्यामेवाधिकारो विद्यायामस्येति केन उपायेन अवगम्येत ॥ नालमेषसर्वस्यापि सांगवेदस्य पारदृश्वा भविष्यती" ति विचिन्त्य विद्याग्रहणावधिबोधकमुपायविशेषमाहूय गृहिणीं कर्णे अकथयत् ॥ गृहीतार्थायाञ्च कल्याण्यामनुज्ञयाअभ्यंतरं प्रविष्टायां भुक्तवन्तश्चांतेवासिनः गुरुसमीपमुपसेदुः ॥ तदानीमाचार्याज्ञया सर्वेऽपिछात्राः स्वेषु स्वेषु शास्त्रेषु व्यवदंत ॥ येन तत्र भवान

परिश्रमस्यात्मीयप्रवचनस्य च सफलताममन्यत ॥ त एव विद्यार्थिनः सैव विद्या । येन उपदेष्टारः परितुष्यन्तीति मनसि कलयन् अभिनंद्य च विवद नमनुज्ञायशयितुं स्वयमपि मनसा कहोडं चिंतयन्नेव कथमप्यतीत्य जागरणं सुष्वाप ॥ गते च निशीथे अचक्षुर्व्यापारेण मनसा केवलमाकारं प्रभाभासुरं पश्यन् आचार्यः तेनैवमुक्तश्च ॥ संप्राप्तश्चायमग्रजन्मा कहोडः । अस्य च बहुतरः श्रेयोनिकरो भवत्स्वायतते ॥ नहि कालांतरमालोचनीयं । इतस्तृतीये दिवसे विधिवदुपनीयतां । विद्याव्रतस्नातायचास्मै कन्यकादीयतां । अस्यामाविर्भविष्यताचापत्येन जागतं ब्राह्मञ्च प्रयोजनं बहुकारिष्यते इति ॥ तत्क्षणे एवांतरधाच्च तेजञ्जः । आचार्यस्तु मुषितधन इव विस्मृतवेद इव झटितितस्ततो निरीक्ष्य कमप्यपश्यन् किमयं चिन्तायाः परिणामः, आहोस्वित् चित्तस्य परिस्पंदनवैचित्र्यं अथवा स्थिरभावनापरिस्फुरणभेदः इति संदिह्य दैवमेव कहोडविषये मां चोदयति । स्वप्नोपदर्शितमूर्तयो भाविनमर्थं विशिष्य दर्शयंति महांतः ॥ सर्वथाऽनतिपात्यः कहोडस्य विद्याग्रहणकाल इति निश्चित्य स्मारंस्मारं प्रहृष्यन् आप्रभातमक्षिणी अनपिधाय शिष्यजनताध्ययनध्वनिविद्रावितांगिकश्रमः प्राभातिकं कर्मानुष्ठातुमुदगात् ॥

कहोडश्च कांडदर्शकदत्तमन्नमुपभुज्य भाविनं प्रथमाश्रमधर्ममभ्यसितुकाम इव स्थण्डिलशयनोऽकृतनीशारः विनिद्र एव क्षपां क्षपयित्वा प्रभातकृतस्नानः गुरुगृहमासाद्य तदुक्तं तृतीयंदिवसमुपनयनायोत्पश्यन् यथा नियोगमंतेवासिभिश्शिक्षितधर्मा तत्रैव विघसमश्नन् उद्दिष्टं प्रतिपालन्नुवास ॥ आगते तार्तीयीके दिवसे कल्पितोपकरणसंपत्तिराहूयाश्रमवासिनः समया च सर्वान्वृद्धान् आचार्यः कहोडं विधिवदुपनीय धर्मांश्चावश्यकानवाबोधयत् ॥

इत्थमुपनीतस्यापि कहोडस्य आश्रावणपौर्णमासं सामयाचारिकाः धर्माः गुरूपसदनप्रकारभेदाः भिक्षाचरणविधयः अभिवादनक्रमाः प्रात्यहिकानुष्ठेयार्थविमर्शा आचारव्यवस्था इत्येवमादय एव गृहीतव्या अभवन् ।

श्रावण्यां च कृतोपाकरणः सांगान् वेदान् शुक्लकृष्णपक्षभेदेनाध्येतुमारभताचार्यात् आ तैष्याः पूर्णिमायाः॥ ततो विरम्य काले कृतोपाकृतिरग्रहीत् वेदं॥ एवं क्रमेण अनपराध्यन् आचार्यपादेभ्यः अपरिस्खलन् रेखामात्रमप्यनुष्ठानपद्धतेः अक्रीडन् अन्यैः अनालपन् वितथवचनानि अनिद्रन् क्षपाः अस्मरन् सुखस्य अचेतयन् देवतान्तरस्य आविष्कृतगुरुभक्तिः यज्ञियांश्च हरितप्रभाभासुरान् मुष्टिपरिमितान् कुशपलाशान् आजहार। असिञ्चत् आश्रमवृक्षकान् ॥ अवर्द्धयत् मृगपोतकान् । अपाचिनोत् बालेयानि कुसुमानि ॥ अस्नापयच्च गुरुं । समवाहयच्च आचार्यपादौ । किं बहुना यस्य मूर्धा इद्ध्माहरणेन बाहू च संभारसंभरणेन पादौ आचार्यार्थपर्यटनेन सर्वांगानि गुर्वर्थकरणेन अभिनन्दनीयानि अभूवन् ॥ आत्मकार्याणि नान्तरीयकाण्यन्वतिष्ठत् । इत्थं शुश्रूषमाणः कहोडः उपदशान् परिवत्सरान् गमयामास ॥ किन्तु परिचरणप्रकारस्यात्मीयखेदस्य चानुगुणा नासीत्तस्य विद्यासंपत्तिः । संहितास्वेव जातः परिचयः । न पदक्रमके वैदिका एव शब्दा अशिक्ष्यन्त न सरसा लौकिकाः । एकैव शिक्षा शिक्षिता । न बह्वृचः । न पर्याप्तमुदभूत् छन्दसि परिज्ञानं । न गणने प्रावीण्यमभजत ॥ न निरुक्तेषु बह्वीयान् प्रवचनक्रमः । कल्पेषु तु अल्पतरो विभवः संबभूव ॥

इत्थं कृतपरिचयञ्च कहोडमंतेवासिनः गृहीतसर्वविद्याः उपाहसन् ॥ "कथमित्थ जागरित्वापि न सकलास्सोपस्कारं संपादिता विद्याः इत्यहो वर्षीयसां विह्वलैव प्रवृत्तिः बालिमेति तु विद्यायाः परमोपकरणमिति" ॥

कहोडस्तु "सतीर्थ्यपरिहासः परं पांडित्यनिदानं । असूया हि कल्पते विद्याविषयिणी विशेषेणोत्कर्षाय । नह्येवमेतेषां छात्राणामनल्पजल्पनेन मम शेमुष्याः कोपि विकारः प्रादुर्भवति । सदैव खलु ध्यातव्या गुरूणां श्रीसूक्तयः न पुरोभागिनां वाचः । अनारतमासेव्यमाराध्यानां पादपङ्कजं । न व्युत्पथोत्थानं । असकृदनुष्ठातव्यो महतामाचारक्रमः । न मूर्खाणामाचारः । सर्वथा अपरित्याज्यो भावानुबंधः विद्यायां । अनिमेषमास्वादनीयः चरणशुश्रूषारसो गुरूणां ॥ अविकलं कल्पयितव्यो व्रतविशेषः ।

किं बहुना को वा गुणो निर्विद्यस्य पुंसः । नहि शिरस्पदतामञ्चन्ति निरामोदानि कुसुमानि"--इत्थमाधायात्मनो धैर्यं अपरिच्चयुत्यानुष्ठेयपथात् कहोडस्सादरं सभक्ति च महाप्रभावस्य सुगृहीतनाम्नो रम्यवचसः उद्दालकाचार्यस्य वरिवस्यासुखमनुभवन् गमयामास अनेकान्परिवत्सरान् ॥

गते बहुतिथे काले आचार्यपत्नी प्रतीक्ष्य कञ्चन कालविशेषमनुरहसमाहितलज्जमाभाषितुकामा उपान्तिकमाचार्यस्योपसृत्य यथाविधि प्रणम्य शिष्यस्य कहोडस्य एकांतशुचीनाचारान् अस्ततन्द्रां च विद्याव्यसनितामुपवर्ण्यापत्यस्य श्वेतकेतोर्दारक्रियां मनसि कलयन्ती मधुरमित्थमाचष्ट॥ "आर्यमिश्राः स्वातन्त्र्यं हि नाम स्त्रीणां विशेषतः परिगर्हणीयं वस्तु॥भवतां सन्निधौ लब्धपरिचर्यासुखायाः मम तु तत् दूराद्दवीयो निक्षेप्यं। जानन्त्यपि मानसेन केनचिदुद्वेगेन चिन्ताविशेषेणच दूयमाना प्रारभे निवेदयितुं । न खलु भवादृशां अविदितोर्थः कश्चनास्थीयते निवेदनीयतापदमारोपयितुं तथाप्यर्थत आशाविशेषेणचासौ मुखरीक्रियते ॥ न मे किञ्चिदपि सौभाग्यमपहीयते । कृताश्वमेधानां पंक्तिपावनानां श्वाफल्कानां कुले अमुष्याः जन्म । निरतिशयमहानन्दसंदोहदानचतुरे निष्कामकर्मानुष्ठानविख्याते अधिकाधिकान्तेवासिजनतावितीर्य्यमाणविविधविद्यावितानविशेषितयशःकाये जगत्परिपावने भवतामन्वये लब्धमस्या दास्यमिति असेतुरानन्दसागरः ॥ अयमपरो महान्प्रमोदः । यदियतः कालस्य वः चरणवरिवस्यातोऽन्यस्मिन् न लगति मे हृदयं ॥ अन्यश्चायं कश्चन उत्कर्षः । यत्समुचिते काले अपत्यस्यासादनं नाम । कतिवा न संति जगति जातापत्याः ॥ न तादृशी अहं । अथवा अत्र भवन्तः कृष्णेनानकदुन्दुभिरिव रामेण दशरथ इव अधीतसर्वविद्येन आज्ञानतिलंघिना श्वेतकेतुना खलु पुत्रिणः ॥ तस्य किलापत्यभांडस्य दारक्रियायोग्यां दशां गतस्य कृतविद्याव्रतस्नानस्य वैवाहिके कर्मणि कथं न कृतो भवद्भिः प्रयत्न इति दूयते हृदयं । कदा खलु स्नुषा मे समागत्य यज्ञशरणमुपलेप्स्यति ॥ कदावा क्षीरक्षारिणीः होमधेनूर्दुहंती कांस्यपात्रीमापूरयिष्यति ॥ कदावा यज्ञवाटे

धृतदीक्षाञ्च मां दीदृक्षमाणा वृद्धास्सुमंगलीराराधयिष्यति उचिताभ्यर्हणपरिपाट्या । कदा खलु आलवालमंबुभि रापूर्य संक्षिप्य च सायन्नीवारबलिं प्रतिष्ठाप्य बहिर्वेदिकायां दीपिकाः श्वशुरयोरन्येषाञ्च वृद्धानां पादवन्दनमाचरिष्यति ॥ न केवलमियती स्नुषागता चिन्ता ॥ इत्थमेव कन्यकापि कस्मैचन दत्ता कदा मामानन्दयिष्यतीति परमो मे हृदयतर्षः ॥ यच्चास्या अधुनाऽतिवदन्त्या जल्पितं तदपि क्षम्यतां । सत्यं हि नाम तत् यदुत्तानबुद्धयः प्रमदा इति ॥

एवं वदन्तीं सुशीलामेनामादरेणाभिवीक्षमाणः आचार्य आह स्म । संप्रति सांप्रतमेवाऽभिहितं ॥ विपथवर्तिनीनां खलु प्रमदानां प्रमाद्यन्ति वाचः विपरीतार्थपरिकल्पनेन ॥ श्वेतकेतुश्च विद्याव्रताभ्यां स्नात इति निर्वृतं मे हृदयं ॥ नहीदमपुण्यभाजां सुलभं । अभिजाता कापि कन्यका अनतिचिरेण पाणिग्राह्या भविष्यतीति न मे तस्मिन्विषये तावानुद्वेगः ॥ •यावांश्च कुमारिकोद्वाहे ॥ कन्यकाजनश्च निक्षेप इव रक्षणमेव केवलमर्हति ॥ यावता गुणवते न दीयते तावत्येव पतति पिता दुःखपाथोधौ ॥ ऋषयश्च बालिम्न्येव कन्यकानां उद्वाहकलनां श्लाघन्ते ॥ सत्यन्नामेदं ॥ उचितेचावसरे अप्रतिपादितोऽर्थनिक्षेप इव खेदाय केवलं संपद्यते खलु प्रौढीभवन्ती कन्यका ॥ यच्चास्या बाल्यवयोनिष्क्रमणं तदेव जनयितॄणां जनपदनिष्कासनं ॥ यच्चास्या मध्यकार्श्यं तदेव वंश्ययशसः प्रच्यावनं । यश्चांगानां प्रथिमा तदेव बन्धुसमाजद्वारस्य पिधानं ॥ सरितं प्रावृडिव पयोधरोन्नमनकाले सान्वयं पातयति उद्वेगावर्तकलिले परिवादपयोनिधौ ॥ न केवलमिदं ॥ गुणवाननुरूपश्च जामाता जगति दुर्लभ एव ॥ न खलु स्वयंवरश्शस्यते ब्राह्मणानां ॥ येन दृष्टमहिमा कश्चनावेक्ष्येत पतिः ॥ नः कुमारिकाचार्हति गुण्यं युवानं धीमन्तंपतिं नेदमुचितं। यद्यस्मैकस्मै च न दीयतामिति ॥ बहवः खलुच्छात्राः शिक्षितविद्याः कृतोद्वाहाश्चाभवन्। संप्रति प्रथमाश्रमिणां समाजोनातीव वर्तते ॥ कन्यकानामुदर्कशुभदर्शिन्यः प्रायेण जनयित्र्यः ॥ कुमारिकास्वायतंते मातॄणां प्राणाः। भद्रमुखि श्रूयतां

संकल्पः ॥ इदानीमन्तेवसंश्च कहोडः अनतिचिरेण स्नास्यति ॥ सद्गुणश्चायं ॥ सर्वविधेनापि मां शरणमुपागतः । किन्नजानीषेऽस्य कुलीनतां व्यसनितां चारित्रञ्च ॥ अविचारः खल्वनर्थाय ॥ उभयोश्चानयोः उचितो विवाहविधिः ॥ प्रायेण मन्ये तथैवानुष्ठातव्य इति ॥

ततश्च सा साध्वी मधुरमुपसञ्जहार ॥ "नजानेकिमपि ॥ विधिप्रतिनिषेधाभ्यां किलाहमवगच्छामि हितमहितं वा । कुलवधूनां गोपायितारः पतय एव ॥ विना अमितसुखदातारं पतिं कावान्या देवतानाम । चापलमेव मामचोदयदेवं ॥ क्षम्यतां । विदितवेदितव्याश्च प्रभवंति भवादृशा लोकस्य शुभमशुभं वा प्रकल्पयितुं ॥ अनुरूपश्च कहोडः कुमारिकामर्हतीति सन्निहितोटजवास्तव्यानां वृद्धतापसीनामवगाहनकालिको वचसां प्रचारः । श्वेतकेतवे च उत्तरतारवास्तव्याः कांडलावपितामहादयः अमुमाश्रममनुपदमागच्छन् इति श्रूयते ॥ किमधिकजल्पनेन । दीयतामाज्ञा । तमी च विभातप्राया । आवसथिकाश्च व्यापाराः ब्रह्मीभवन्ति" । इति प्रणम्य लब्धानुज्ञा अन्तः कुटीरं आससाद ॥

आचार्यश्च प्राभातिकं कर्म परिसमाप्य कहोडमध्यापयन् गमयामास कञ्चन कालं ॥ श्वेतकेतुरपि अनुष्ठितस्नानकधर्मा सर्वोपभोगक्षमायाश्रमाय सन्नद्धः कहोडमपि करुणयान्वध्यापयन् तारामैत्रीमाबबन्ध ॥ कहोडोपि अल्पीयस्त्वादध्येतव्यवेदभागस्य अनुष्ठितचरत्वाच्च व्रतानां स्वल्पमपि कालं भक्तिपरीवाहमेदुरैराचार्योपसर्पणाद्यैः अनवरतचिन्तनाभूयिष्ठैः प्रबन्धाधिगमप्रकारैः श्वेतकेतुकृतसाहाय्यकेन लघुनोपायेन भूयस्तरां ज्ञातव्यार्थसंपत्तिमुपचिन्वन् आचार्यानन्दपात्रं भवन् मार्गशीर्षान्तांश्च मासानतिवाहयामास ॥ सुमंगोत्तरतारवासिनः आश्मरथ्यप्रभृतयः अन्तेवासिमुखेनाधिगतश्वेतकेतुवृत्तांताः समुचिते च काले कन्यकामस्मै दित्संतः प्रत्यपालयन् भागधेयपरिपाकं ॥ पुंसानुजाच उद्दालकपुत्री अनुतिष्ठंती वैखानसीं वृत्तिं संवर्धयन्ती च आश्रमवृक्षकान् प्रत्यहमुपचीयमानयाङ्गशोभया विराजन्ती, शिक्षितविद्याचारा रेखामात्रमपि स्वपथादप्रच्यवंती अतिष्ठत् ॥

इत्थंभूते च व्यतिकरे विरमयन् विशेषाध्ययनानि अंकुरयन्आतिशिशिरान् हैमनपवनान् प्रकल्पयन् पथः परिशुष्ककर्दमान् परिम्लापयन् पङ्केरुहवनानि परितापयन् पान्थनिवहान् गाधयन् सरित्प्रवरान् उल्लासयन् उपसरणोक्षणः उपक्लेशयन् उद्यानलताः जृंभयन् जंभीरवृक्षकान् पिशङ्गयन् शालेयक्षेत्राणि उद्दीपयन् राजवर्गान् उदग्रयन् त्वचिसारान् प्रभूतयन् पाण्डुर सैकतानि उन्निद्रयन् शार्ङ्गधन्वानं उपद्रवयन् शरदं संघटयन् यूनां मत्तकाशिनीस्वयंग्रहपरिष्वङ्गं उदञ्चयन् श्वश्रेयसमार्गान् उदियाय हैमनोवासरः ॥ तदाच तैष्यां पूर्णिमायां ऋषीन् आचार्यानन्यांश्चाभ्यर्हणीयानभिपूज्य यथाविधिगृहीतस्याध्ययनस्याज्ञानागतान् दोषान्निवर्तयितुकामः उपोष्य परदिने आचार्यस्य यज्ञियेन्ध्माहरणमनुष्ठाय निवृत्तमिथ्याधीतदोषः कहोडः आचार्यान्तिकमासेव्य गुरुदक्षिणां प्रणम्य प्रार्थयामास। आचार्योपि तदीयां शुश्रूषामेव बहुमन्यमानः प्रशस्य दृढतरां भक्तिं प्रयुज्यचाशिषः उपाघ्राय मूर्धनि तमित्थमाबभाषे ॥ "अये वत्स कहोड संप्रति युक्तः कालोद्वितीयाश्रमाय ॥ विनाआश्रमान्तरपरिग्रहं नसाधुमन्ये स्थितिं भवादृशानां। ताः खल्वन्यादृश्यः तेषां प्रकृतयः ॥ येच जातमात्रा एव महान्तं वैरङ्गिकस्वभावमवाप्य परया ज्योतिष्मत्या वृत्या पश्यंतः लोकोपकाराय केवलमवतरन्तः पृथिवीं प्रवर्तयन्ते नैष्ठिकचर्यायां। ते तु परमं साहसमाचरन्तीति योगशास्त्रमुद्धोषयति ॥ अननुभूय वैषयिकं प्रवर्तमानो विरागिपथे न चिरमद्धातिष्ठतीति हि निदानं महतां गार्हस्थ्यस्य ॥ किं बहुना वातापिनियन्ता च तत्रभवान् कुंभसंभवः चरमे वयसि लोपामुद्रया सहचरितधर्मा बभूव ॥ अतो भवते मम कुमारिका आयुष्मती सहधर्मचारिणी दातव्येति मे निर्णयः ॥ अनतिचिरेण व्रतस्नानमपि भविष्यति । सन्ति पक्षान्तराणि धर्मशास्त्रेषु देशं कालञ्चानुरुध्य ॥ क्रियतां गौणोपि व्रतविधानमार्गः ॥ मामकसङ्कल्पश्च इत्थं । वसन्ते पुण्यदिवसे भवतः कुमारिकायाश्च उद्वाहः निर्वर्तनीय इति वचनं व्याजहार ॥ श्रुत्वाचेदं कहोडः सम्मूर्च्छितलज्जः स्वेदांभःपरीतमूर्तिरवनम्य वदनं सगद्गदकण्ठः पुनरवादीत् ॥ "आचार्याः

दोषानभिष्वंगिषु भवादृशां वचस्सु जाने प्रामाण्यमनुपमं । पितुर्वचनप्रामाण्याद्धि रेणुकानन्दनः मातुश्शिरोऽच्छिनत् ॥ विचित्रा एव चेतसां प्रवृत्तयः ॥ जायमानश्च सन्देहः गुरूपदेशेनापाक्रियते ॥ अतः पृच्छामि ॥ मा च भूदमुष्मिन् प्रतिघा ॥ न हि बिन्दुपरिमितोपि व्यत्यस्यते भवतामाज्ञाप्रकारः ॥ चेतसि समारूढश्चार्थसन्देहः विनार्थनिर्णयं न नश्यति ॥ भवतो विद्यावंश्येनामुना अपत्यपर्यायेण कथं भवदीया कन्यका परिणेया स्यात् गुरुवच्च गुर्वपत्ये वर्तनमनुशिष्यते छात्राणां । श्वेतकेतावपि दृढा भक्तिराबद्धेति" ॥

निशम्य आचार्यः प्रहसन्नर्थतुन्दिलेन अपि न जानीषे देवयानीकथामिति वचसा सावहेलं प्रत्युत्तरयन् क्रियतां मदाज्ञेति राद्धान्तयन् कहोडशिक्षणाय श्वेतकेतुं कटाक्षयन् पुरस्थिते सरसि माध्यंदिनं कर्म कर्तुमगात् ॥ श्वेतकेतुश्च विषयभेदेन व्यवस्थापयन् कहोडमकलुषहृदयं चकार॥ स चाङ्गीकृत्य सर्वं व्रतस्नानप्रकारं श्वेतकेतोश्शिक्षमाणः एकमृतुं गमयामास ॥ स्सुमंगोत्तरतारवासिनः पारायणपरायणाः वृद्धाः समुचिते काले उद्दालकेन अयाच्यन्त श्वेतकेतवे कन्यकां ॥ ते तु अनभ्रामिव वृष्टिं अकुसुमोदयामिव फलसमृद्धिं अखलसंबाधामिव बुधगोष्ठीं असत्यदूरीकृतमिव प्रियवचनं अनुभूय परमांधृतिं अनुक्षणं "अहो धन्यास्मः यल्लब्ध इदानीमुद्दालकस्य संबन्धः ॥ अन्यादिदं कौतुकस्थानं यद्गुणवान् श्वेतकेतुरस्याः पतिरिति परं प्रहृष्यामः ॥ यत्साध्वितमा उद्दालकार्यपत्नी कुमारिकायाश्श्वश्रूः नश्च संबन्धिनी । निरस्तश्च विधेर्विरूपघटनासंकल्पः । यत् कुलेन शीलेन आभिजात्येन साधुतमाचारेण सरसभाषणेन चातीव महितास्संबधिनो जाताः" इति वरिष्ठगुणप्रकाशिका वाचः विस्तारयन्तः विशिष्टमानन्दमन्वभूवन् ॥

तदा उभये च समुह्य "वसन्ते प्रादुर्भवति निर्वर्तनीय उद्वाहविधिरिति निरचैषुः ॥ उभयेऽपि च्छात्रान्बन्धुभ्यो भावुकं निवेदयितुं प्रैषयन् । विज्ञातश्वेतकेतूत्सवाः यथाकालमागच्छन् कौतूहलेन बन्धवश्छात्राश्च ।

 

इत्थं सुमङ्गाया दक्षिणोत्तरतीरं सर्वमपि ऋषिकुटुंबकेन च्छात्रवर्गेण चाधिष्ठितं विरेजे ॥ व्यतीते च शिशिरऋतौ वसन्तसमयोऽपि कहोडमनुकुर्वन्नुदियाय ॥ तथाहि तीव्राणि दुश्चराणि ब्रह्मचर्यव्रतानीव जीर्णान्यमधुराणि पर्णानि समापयति ॥ मौसलस्नानेन संभृतशरीरमलानीव शिशिरकालोपचितानि अवश्यायपिण्डातङ्कानि दूरीचकार ॥ मूर्ध्नाधृतानीवेन्धनानि अवरोप्य हर्षमिव पल्लवांकुरान् परिपोषयति ॥ विधूयाज्ञानान्धकारं प्रहर्षयति स्म पांडित्यफलोद्गमप्रदर्शनपरिपाट्या ॥ श्रुतीरिव मायूरीः केकाः प्रगुणयति ॥ केशश्मश्रुनखानीव याप्यानि तमालपर्णपलाशमुकुळानि परित्यजति ॥ अच्छतरज्ञानमिवामृतदीधितिमाविष्करोति । अनवरताध्ययनमिव सदागतिं सृजति । परतन्त्रतामिव कुटजसन्ततिं क्षिणोति ॥ स्वातन्त्र्यमिव दार्शितफलां चूतवाटीमंकूरयति ॥ विद्याव्रतसंगमिव नवमालिकासहकारसंपर्कं सरमाविष्कुरुते ॥ यस्य खलु कहोडस्येवानतिचिरेण माधवीशोभा परमरमणीया भविष्यति ॥

तादृक्षेच समये पुष्प्यत्पलाशे संलपच्छारिके कूजत्पिकयुवतौ मिळन्मिलिन्दसंरावे वेल्लत्सदागतौ अंकुरत्पल्लवे वसन्ते चैत्रे मासि पूर्वस्मिश्च पक्षे सुभगंभावुकतारागुणोपेते दिवसेचैकस्मिन् श्वेतकेतुं पुरस्कृत्य उद्दालकादयः उदित्वरहर्षाः प्रतस्थिरे कन्यावरणाय प्रगुणगुणाभिः कर्णजाहलंबमानताळीपत्रताटंकाभिः कुंकुमच्छुरितललाटपट्टिकाभिः जातीकुसुममालासमुल्लसितकेशपाशाभिः करधृतफलभस्त्रिकाभिः उलूलुध्वनिभूषितमुखीभिः प्रमदाभिः सह समङ्गोत्तरतीरं ॥ तत्रचोत्तरतीरे परिष्कृतायां पर्णशालायां परितः संस्तीर्यमाणेषु वेत्रासनेषु उपवेश्य समागतानुद्दालकादीन् अनतिक्रम्य समुदाचारं प्रख्याप्य वाग्दाननिश्चयं इतस्तृतीयेदिवसे तत्रैव वयं समागत्य अनतिलंघ्य भवदाज्ञां निर्वर्तयामो दारक्रियांपुरेति सभायामुत्थाय वदन् अश्मरथः साधु तेषां सम्माननामकल्पयत् ॥ तत्रैव तां रजनीमतिवाह्य श्वःप्रभाते कृतप्राभातिककर्माणः आचार्यप्रभृतयः तस्मिन्नेवबन्धुसमाजे कहोडाय कन्यका मदीया दातव्या तस्मिन्नेव मुहूर्ते इति निश्चित्य

सयोरुभयोरुद्वाहाय संभारान् संभरितुमाज्ञायान्तेवासिनः सूपादीनाभ्यवहारिकांश्च यथावकाशं यथालाभञ्च समपादयन् ॥ कल्याणपूर्वदिनेचाचार्याणी सार्कंपरिमिताभिः बन्धुवृद्धाभिः साक्षतकुंकुमपात्रहस्ताभिः यथाचारमाश्रमस्थिताः कुमारिकाः वृद्धाश्च सुमंगलीर्यथासमयं समाह्वयत् ॥ आचार्योऽप्यन्तेवासिमुखेन सर्वेभ्यो निवेदयामास सुतापरिणयमपि ॥ कल्याणविळंबमसहमानइव भानुरपि झटिति सागरे ममज्ज ॥ आचार्यसुतापरिणयमहोत्सवमाशानामाशुबोधयितुमिव सानुरागा सायन्तनी क्षणादेवदुद्राव ॥ द्विजराजोपि साक्षादानन्दमनुभुभूषुरिवनभसो मद्ध्यमानञ्छ ॥

प्रभातायाञ्च शर्वर्यां आचार्यादयश्च महान्तः स्नातोत्थिताः कलितपुण्ड्राः अर्यम्णे समर्प्य जलाञ्जलीन् कृतोपस्थानाः यावता आश्रममुपावर्तन्त तावतैव कुतूहलिनश्छात्रास्तदन्येच बाह्ये आभ्यन्तरेच चत्वरे विधायकायमानं कदळीस्तंभैस्सतोरणैःपरिभूष्य महायोगिनां पण्डितानां मन्त्रकृतां छात्राणामन्येषाञ्च यथार्हं विष्ठरादिभिः स्थानं विभज्य कृतप्रातराह्निकाः प्राञ्जलयस्समागतानपरिभूय सम्यञ्चयितुं धृतकच्छाः विनया इव मूर्तिमन्तः उपाश्रममेके उपद्वारमन्ये अधिचत्वरमपरे कतिपयेच महानसे इति धृतमर्यादाः अप्रमादेनाभ्यर्हयाञ्चक्रुरभ्यागतान् ॥ आचार्याणीप्रभृतयश्च प्रमदाः आभ्यन्तरे चत्वरे चतुरश्रे वेदिके द्वे निर्माय सर्वतश्च रङ्गवल्लीविलेखनचातुर्येणाचित्रीयन्त भित्तिकाः प्रघणान् प्रांगणानिच ॥ तत्र पौरोहित्यमभ्युपगतः वार्ष्यायणिः स्वीयेन लोहजंघेन अन्तेवासिना समागत्य उपवेदि प्रकल्प्यानि मार्तिकानि शरावाणि अंकुरस्थालीपात्राणि प्राज्याज्यभाजनानि लाजपूर्णानि शरावकाणि आर्द्राक्षताहितशोभानि नीरंध्राणिचालिनीकानि देवताबलिभाञ्जि पिशंगवर्णभासुराणि कर्करिकानिकराणि साग्राणि कदळीपत्राणि हारितायमानाः कुशपूलीः अतिशुष्काःस्थविष्ठाश्च परिसंख्याय निबद्धाः समीधः सन्निधिस्थापितानि उदकुण्डादीनि उपान्तकल्पितञ्च कञ्चिमश्मानं आग्नेयनञ्चतुन्दिलपात्रं सर्षपप्रभृतीनिरक्षासमालंभनानि हारिद्रितान्युपवीतसूत्राणि अन्यानिर्व्रीहितण्डुलप्रभृतीनि यथावकाशमुपपाद्य

शुभंयौ मुहूर्ते त्वरयामास वधूवरौ वेदिमुपागन्तुं ॥ तदानीं प्रभातप्रभृति अलंकरणाय प्रवृत्ताःवृद्धाः अभिज्ञयुवतयश्च प्रथमतश्शिखामार्जितायाः अभिनवैराहितशोभैश्च ताळीपत्रैः तार्टकशोभां, वेणीकरणेन कौशिकीं भूषां, कुंकुमचन्दनैश्च ललालाटिकं परिकर्म, अलक्तकरसेन पादप्रसाधनं, शलाकाञ्जनेन विशाललोचनपारिष्कारं, पाण्डुरशंखेन बाहालंकारं, क्षुद्रशंखिकाभिरूर्मिकाविधिं, विचित्रतरविन्यासविख्यातहेमसूत्रिकया कण्ठभूषणं, कुरवकमालतीकुसुमैर्मालिकारचनाञ्च, विधाय अहते मङ्गल्येच वाससी परिधाप्य, सामयिकांश्च, धर्मानवबोध्य वेदिं स य. कुमारिकाद्वयं तत्तदीयाः प्रापयामासुः ॥ उभौच कुमारौ यथोचित्तमलंकृत्यातिपतनं कालस्यासहमानः पुरोधाः प्रवेशयामास तत्र प्रदेशे । आगतास्संबन्धिनः पण्डिताः अन्ये च यथायथमासनं भेजिरे । तत्र द्वयोरपि जायापत्योः परस्परं प्रच्छन्नप्रसरा आहितकूणिभावमाधुर्या स्वच्छन्दावकाशालाभेन चिराय संमिळन्ती पुरस्थितजरठजनसमासादितभीतिः मन्दाक्षमन्दिततारका श्वेतत्रिभागावशेषितकनीनिकाविन्यासचतुरा प्रेमप्रकर्षव्याख्यात्री रसार्द्रा दृष्टिः सरोजे इव मधुकरी सौत्सुक्यं पपात ॥ तदनुच पुरोधःप्रदर्शितेन विधिना प्रणम्य तौद्वावपि जायापती उपाक्रमेतां वैवाहिकविधिं विधातुं । तत्रच श्वेतकेतुमश्मरथो मनीषी सगोत्रप्रवरं आत्रिपूरुषमाहूय स्वामपि कन्यकां तथानिवेद्य उदकधारया सह संपूज्य वराय ददौ ॥तदैव उद्दालकाचार्योपि सपत्नीकः कहोडमामन्त्र्य कल्याणीं सहधर्मचारिणीं निवेद्य कहोडपाणिना अस्याः पाणिं ग्राहयामास ॥ द्विजातिवरिष्ठाश्चाशिषस्समभ्यधिकाः प्रयुञ्जानाः आर्द्राक्षतानधिशिरः आरोपयामासुः वृद्धाः ॥ मुनिकन्यकाश्च सहर्षं गाथाः मुक्तकण्ठं कलञ्चजगुः ॥ तदानींवरणस्रजाविभूषितौ द्वावपि वधूवरौ सप्तपदीं परिक्रम्य लाजैर्जुहुवतुः । इत्थन्निर्वर्त्यमाने विवाहे उभे अपि कुमारिके आत्मनोः कृतकृत्यतां वीक्षणविशेषेणाभिव्यञ्जयन्त्यौ महानिधिलाभे इव परांतुष्टिमाविश्चक्रतुः ॥ संबान्धिनः सहर्षा अभवन् ॥ ब्राह्मणाश्चसमतृप्यन् । जरत्यश्चानुरूपवधूवरदर्शनेन चक्षु-

षोऽस्साफल्यमवापुः । आतिथेयतृप्ताश्चाभ्यागताः साधु प्रशंसन्तः प्रतस्थिरे ॥ केचन संबन्धमनयोः प्रशशंसुः । अन्येतु आनुरूप्यमीडांचक्रिरे ॥ अपरेपुनः विधिं विशेषतः तुष्टुवुः ॥ इतरेच संभाराहरणचातुर्यमावेदयन् ॥ परेच परिषद्विशेषं व्यशिंषन् । एवं निर्वर्त्यमाने सांगेच विवाहे संबन्धिनोऽन्येच निर्विशेषमभ्यर्चिताः परांमुदमवापुः । कदाचित् मृष्टान्नभोजननिमंत्रणेन कदाचित् विदग्धगोष्ठीबन्धनलौल्येन, कदाचित् छात्रपरीक्षाक्रमचातुर्येण, कदाचित् वधूवरविलासव्याख्यानेन, कदाचिदात्मनस्सफलताप्रशंसनेन, कदाचिदाश्रममृगतर्णकविहरणेन, यथावकाशमुषित्वा अधिगम्याचार्यनुज्ञां संबन्धिनः साधुशिक्षित्वा पुत्रिकां स्वंस्वमाश्रमं प्रपेदिरे ॥

तदाप्रभृति श्वेतकेतुपत्न्यपिप्रत्यहं श्वशुरयोः पादाववन्दिष्ट । इष्टिकर्मणीषदपिवैकल्यन्नाभजत ॥ आश्रमालेपने आहितश्रद्धा अभवत् ॥ अतिथिसत्कारेषु आदरवती रराज ॥ नीवारतण्डुलावघातेषु नीरंध्रप्रेमाऽभवत् ॥ न पथि कालमयापयत् ॥ श्वशुरयोरन्येषाञ्च एवमनुतिष्ठन्ती आश्रमस्य कुटुंबस्य कुलस्य अथवासर्वेषां प्रतिव्रतागुणानां, महाशीलानाञ्च तापसीनामादर्शमिवात्मानं दर्शयन्ती प्रधानतमा बभूव ॥ श्वेतकेतुश्च तयासहचरितधर्मा नित्यान्नैमित्तिकान् श्रौतान् स्मार्तांश्चधर्मान् यथाविधि समनुतिष्ठन् तस्यां कालोप्तबीजाया वसुन्धरायामिव सस्यफलम् अचिरेणापत्त्यरत्नमेकमलभत ॥

कहोडपत्नी कल्याणीच चिरसहवासपरिचितेपि कहोडे न लाघवमभजत ॥ महत्येव प्रत्यूषे आवसथिकानि निरवीवृतत् कर्माणि ॥ प्रातः पूजोपकरणानि समपीपदत् ॥ स्नानविशेषेणात्मनः शौचं समचीक्लपत्॥ तानितानिच स्थानानि उपालीलिपत् ॥ होमधेनुसमर्हणामचीकरत् । तदनु नीवारानवजघान ॥ चुल्लीकर्मणि प्रागल्भ्यं दर्शयन्ती पपाच ॥ आतिथेयेषु आहितश्रद्धाऽभवत् ॥ नस्म विस्मरतिगृह्याण्यावश्यकानि कर्माणि ॥ परां मुदमवाप भर्तृशुश्रूषायां ॥ ययाच उत्पत्यनुगुण आकारसन्निवेशः, आकानुविधायिनी प्रज्ञा, प्रज्ञाप्रतिमाचाचारसन्ततिः, आचारानुकारि शीलं, शीलानु-

रूपा शुचिता, शुचितानुकारिणीभक्तिः, भक्तिसदृशीचातिथिवर्गावाप्तिः, अतिथिवर्गसमुचितान्युपकरणसंपादनानि इति परस्परं सविशेषाणि व्यधायिषत ॥ यस्याः खलु, लतायामिवबन्धुवर्गेषु प्रेमानुबंधः, आश्रमवृक्षकेष्विव स्वाङ्गेषु स्नेहदर्शनं, कुरवृकवृताविव कुन्तळभरेषु परिशीलनाप्रकारः, सखीष्विव पतिचरणशुश्रूषासु भावोत्कर्षः देवतास्विवातिथिवर्गेष्वादराधिक्यं अन्धकारेष्विव खलेषु चक्षुरनुन्मीलनं, स्वावयवेष्विव आवसथिकेषु परिकर्मपरिपाटी मातरीव त्रेतायां त्राणप्रावण्यं असत्येष्विव कामुकेषु वागनुल्लासः उदधाविवाशये दार्ढ्यञ्चाभवत् ॥ या तु चञ्चलतां विद्युति नबुद्धौ, कठिनतां ग्रावसु नचेतसि, कौटिल्यं पलाशकुसुमेषु न भावप्रकाशेषु, चम्नतां नर्मालापेषु नातिथिसत्कारेषु, खण्डनं शुष्ककाष्ठेषु नाज्ञासु, प्रतिलोमगामितां आवर्तेषु न समुदाचारेषु, कलुषतां वार्षिकनदीप्रवाहेषु नानुष्ठानविधिषु इति नियमयन्ती नियमपरा नितरां रेजे ॥ साचेयं क्रमेण वसन्तेनेवाचार्येणोत्पाद्यमाना सलिलसेकेनेव प्रत्यहमन्नादिना वर्धमाना मालाकारस्येव उपदेष्टुरसिधाराचार शिक्षणेन चारूल्लास्यमाना वसन्तसमीरणेनेव वपुषाप्रतिपन्नलावण्यांकुरा ऋतुनेव वयोविशेषेण जातपुष्पा कुसुमोद्गमेनेव विभ्रमाविर्भावेण शोभमाना-मधुकरेणेव पत्या समास्वाद्यरसा फलोदयस्येव अपत्यस्यअलाभेन किञ्चिदिव न्यूनतां भजन्ती वरिवस्यासुखेन केवलमात्मानं प्रीणयन्तीप्रौढीभवन्ती लतेव चीरमस्थात् ॥

चिरयन्त्याञ्चास्या अनपत्यतादशायां वन्ध्याश्रमवृक्षदर्शनेनेवात्मनोधृतिमविन्दन्नाचार्यः तात्कालिकानि रक्षाबन्धनानि, प्रत्यहमनुष्ठेयान्यश्वत्थप्रदक्षिणानि, काकबलिभूतानि दध्यन्नानि, शुचिसाध्यानि सन्मन्त्रावर्तनानि, विशिष्यवितीर्यमाणान्यातीथेयोपकरणानि, अनारतमनुष्ठीयमानानि तापसीसमाराधनानिच साधु संपादयामास दुहितुः ॥ सन्निहितावसथतया चाचार्यस्य अनवरताभ्यसनीयतयाचाधीतबहुळशास्त्राणां कुशलतया च धर्मपत्न्याः अजातपुत्रकतयाचात्मनः बहुळतया सतीर्थ्यवर्गस्य अजानन्नेव कौटुंबीं वृत्तिं सन्ध्योपासनेन, वैश्वानरपरिचर्यया, देवताराधनेनातिथीवर्गसत्का

रेण अनवरताध्ययनेन च कहोडः कालं गमयामास ॥

अतिक्रामत्सु चाहस्सु तत्कालपचेळिमेन महदनुग्रहेण, प्रतिबंधकदुरितदूरीकरणेनवा साचाचार्यसुता गर्भमधत ॥ जाता च दोहदेषु प्रीतिः । क्रमेणवपुः कार्श्यमाप ॥ पाण्डिमाच वपुषि पदन्यासमकरोत् । निश्वासाश्च समधिकाः प्रादुरासन् ॥ करणीयेष्वपि कर्मसु श्रमाद्वैमुख्यमभजत । मध्योपि क्रमेणात्याक्षीत् कृशिमानं ॥ कुचावपि नीलमुखौ प्रत्यहमवर्द्धेतां । तदानीमाचार्यः सभार्यएव श्वेतकेतुं सजानिमाश्रमे निधाय सांवत्सरिकेष्टिं अनुष्ठातुं यज्ञियद्रव्याण्याजिहीर्षुः द्वित्रान् मासान् समचारीत् ॥ अतिक्रान्तेषु कतिपयेषु मासेषु मैथिलेन प्रेषिताश्च दूताः तत्र तत्राश्रममण्डलेषु इत्थं राजाज्ञां प्रकटयामासुः । “अनुष्ठीयमाने च सत्रकर्मणि वन्दिना विदुषा परीक्ष्य संमानना अनुष्ठास्यते पण्डितानां । वित्तेयत्ता तु न निष्कशतादपहीयेत ॥ अथवा वंशक्रमेण पाल्यमानो महान् ग्रामो वा ॥ आजिगमिषवश्च मासात्पूर्वमेवागच्छेयुरिति” श्रुत्वा एतत् कहोडः अतीव ईषणाकोटौ आटीकमानमानसोबभूव ॥ अनेषणः द्विजातिः अचपलः कपिः अप्रमादस्तारुण्यमद इत्येते जगति दुर्लभा ॥

प्राप्तकाले तस्यास्सीमन्तिन्याः पुंसवनादिकं यथाशक्ति चकार । धृतगर्भया च देव्या प्रेष्यमाणः सभां जिगमिषुः पाण्डित्यभ्रंशमाशंकमानः आवर्तयति स्म गृहीतान् सांगानपि वेदान् विनाकालनिर्णयं । जातुचित् अनवरताध्ययनध्वनिमुखरिताशः स्वपन्तीं भार्यां समया विभक्तासनो यावन्निशीथमधीयानः कहोडः “मा कलय आम्नायावर्तनमकाले इति निषेधाक्षराणि कानिचिदश्रुणोत् । “श्वः परश्वो वा राजसभा प्रवेष्टव्या कथमनुपस्थिताध्ययनः समर्हणां लिप्सेत । अकाले निषेधश्च ग्रहणाध्ययनं विषयीकरोति ॥ न तु धारणाम्” इति विमृश्य पुनरपि अध्येतुमारभत ॥ तदा पूर्ववदेव निषेधवचनं शुश्राव ॥ कोऽसौनिषेधतीति जातत्वरः चतसृषु दिक्षु दिवि भूमौ च चक्षुर्विक्षिपन्नपि नापश्यत् कञ्चन ॥ परन्तु निषेधवचनं यावच्चक्षुरीक्षणमभूत् । तदा वक्तुरदर्शनेन जातकोपं “ ज्ञायते चेत् शप्स्या-

मिति कृतनिश्चयमेनं कहोडं "कथमनाचार्यशिक्षित इव स्वैरमध्येतुमारभसे कालश्चायं निशीथः सन्ति बहूनि यक्षांसि अध्ययनग्रहणलोलुपानि अकालाध्ययनात् अनध्ययनमेव ज्यायः ॥ अयञ्चाष्टमो निषेधः । अहमपि कुक्षौ वसामि ॥ तावकीन एवायं । गर्भवासदुःखादतिरिच्यते भवतोऽध्ययनश्रवणखेदः । इति कुक्षिस्थः शिशुः प्राबोधयत् ॥ तदानीञ्च उत्पन्नकोपः कहोडः "मयैवायमुत्पादितः सिराभिर्बध्यमान एव एवं गर्भस्थः समनुशास्ति ॥ कथमनालोच्य पितृभावं जातमात्र एवानुशासनेऽतीव यतते ॥ काले अशिक्ष्यमाणाश्च बालकाः विपथप्रवर्तने बद्धादरा भवेयुः ॥ अयमेव हि पितुराचारः यद्यद्बप्रवृत्तानां विशेषतो दण्डनन्नाम ॥ इति संप्रधारयन् उपस्पृश्य "रे शिशो यतस्त्वं मामष्टधा न्यषेधीः अतस्त्वमष्टावक्रो भविष्यतीति शप्त्वा विरम्याध्ययनात् श्रमेणाधिस्थण्डिलं सुष्वाप ॥ कुक्षिस्थेनापि शिशुना अनुभोक्तव्यः कर्मविपाकोऽयं । कृतानि सुकृतानि दुष्कृतानि वा तमेवानुगच्छन्ति ॥ जन्मान्तरसञ्चितं पापमपनोदितुं किल जननीजठरे वासो विधिना विहितः ॥ तथैवायं कश्चनापनोदनप्रकारः । पिताचायमतीव उपकुरुते । अतो न वृथा कलहः करणीयः इति तावतैवात्मानं नियम्य प्राकृतशिशुरूपप्रमुषितपूर्ववृत्तः तूष्णीमुदरे अशयिष्ट ॥ तदेवचास्यांगान्यष्टधा वक्रिमाणमभजन्त ॥

कहोडश्च स्वापादुपलभ्य प्रबोधं पूर्ववत् पारायणपरायणो निर्वृत्य प्राभातिकं कर्म यावदाश्रममागमत् तावत् पत्न्यपि पितुरनागमनेन खिद्यन्ती पतिदर्शनेन निगृह्य शोकमित्थमाचष्ट ॥ आर्यपुत्र भवतः श्वशुरपादा नागच्छन् । श्वेतकेतुरपि तदागमं प्रतिपालयन् ममापि साहाय्यकायास्मिन्नाश्रमे वर्तिष्यते ॥ मैथिलस्य राज्ञो वितरणसमयश्च सन्निदधाति ॥ प्रारब्धश्च सत्रदीक्षाप्रवेश इति प्राहुणिकाः कथयन्ति ॥ अल्पीयानेवान्तरालिकः कालः । यदि विना परिश्रममवाप्यते भूरि वित्तं । तर्हि कोवा प्रतिषेधेत् ॥ चिन्तनीयश्चायमयमर्थः यत् भाविनः कालस्य कथं शारीरयात्रां निर्वहावहे यावत् इति ॥ शोचनीया चावयोर्दशा ॥ नातीव भवादृशानामुपदेष्टव्यं ।

कठोगर्भायाश्च मम वैजननो मासो मासाभ्यामागमिष्यति ॥ न जाने । कथं सर्वमुपपन्नं भविष्यतीति ॥ श्रुतवचनश्च कहोडः तस्मिन्नेव दिवसे प्रतिष्ठासुः श्वेतकेतुं नियोज्याश्रमरक्षणे विशेषतो भगिनीविषये कृतभोजनोऽह्नाय लब्धपाथेयः सायमेकस्मिन् आश्रमे परिसमाप्य सायन्तनीं संध्यां भुक्तपाथेयः परश्वःप्रभातमतिक्रम्य प्राविशद्यज्ञवाटीं मन्ध्यंदिने मैथिलराजस्य तदा चानुष्ठिताचारः कहोडः नृपसभं प्रविश्यात्मनो विद्यासमृद्धिमख्यापयत् ॥ तत्र मैथिलेन राज्ञा नियुक्तः प्रकृष्टविज्ञानः पण्डितमण्डलीपिण्डीकरणधौरेयः प्राश्निकपदं लंभितः विख्यातो वन्दीतिनाम्ना परपरिभवप्रख्यापनपथापरिच्युतसञ्चारनिपुणः कोपि कहोडेपि कञ्चन कालिकं प्रश्नप्रकारमद्धाबोधयत् ॥ यावताचार्यसाधूत्तरन्नप्रत्यपद्यत तावतैव पूर्वपण्डितानामिवास्यापि जले निमज्जनं दण्डं व्यधाद्वन्दी ॥ कहोडोपि आत्मीयपाण्डित्ये निर्विद्यमानः आ मरणादात्मनः सेवकतां अङ्गीकुर्वन्नन्तर्जले निमज्य पाताळे वितन्यमानस्य यज्ञस्य पर्यचारीत् ॥

सा तु कहोडपत्नी चिरायाते पत्यौ परां दुःखसन्ततिमनुभवन्ती सकृदेवाह्नि स्वीकृताशनाभवत् । न वेणीसंस्कारमाचरत् । न गन्धमाल्ये बिभरामास । नैवाग्रहीत्तांबूलीदळचर्वणरसास्वादं । इत्थं याति दुःखदीर्घे संतोषरहिते सन्तापमेदुरेच वासराणां गणे वनान्तरादुपावृत्ताय पित्रे स्वीयं सर्वमपि वृत्तं श्वेतकेतुनिवेदनाम्रेडितं निवेदयामास करुणपरिदेवनीयं तपस्विनी ॥ आचार्योपि प्रणिधानेन वार्ताप्रसरणेनच जामातुरुदन्तं विज्ञाय उपायं कमप्यनुत्पश्यन् श्वेतकेतोः प्रस्थापनेऽपि प्रथीयसीं पीडामूहमानः दुहितुः परं समाश्वासनवचसा जीवितं धारयन् अतिवाहयामास कतिचनानेहसः ॥

एवं स्थिते सा तपस्विनी कञ्चनापवरकमधिशयाना तापसवृद्धाभीरक्ष्यमाणा अनतिकृच्छ्रादेव शुभंयौ मुहूर्ते नारदकल्पमष्टधाङ्गवक्रिमाणमागतं तेजोमयं कञ्चन सुतमसूत ॥ यस्मिंश्च जातमात्रे दिशस्सर्वाः प्रसादमासेदुः ॥ समीरणाश्च मन्दमन्दं ववुः ॥ मयूराश्च प्रकाश्य केकाः

ननृतुः । मृगपोतकाश्च महतानन्देन पुप्लुविरे । वायसोऽपि वांछितार्थं वाशितेन व्याचख्यौ । इत्थं शुभसूचकानि तानितानि लक्षणानि प्रादुरासन् । आचार्योऽपि मंगळसूक्तानि जजाप । जातकर्म च जातमात्रे व्यधत्त । कुमारभृत्याकुशलाभिरारिष्टगृहमासेदुषीभिः तानितानि औषधानि पथ्यभोजनानि कारयामास । क्रमात्सु दिवसेषु प्राप्ते च एकादशेऽहनि शिखामार्जितायां पुत्र्यां श्वेतकेतुना समाहूतेषु आश्रमिषु कुमारस्य शारीरवक्रिमाणमनुरुध्य अष्टावक्र इति नाम अकरोत् । अष्टावक्रश्च जातमात्र एव शोभाविशेषण वैदिकाशीर्वचनवैभवेन वृद्धतापसीनां सानुग्रहवीक्षणेन च कञ्चनांगिकमतिशयमादधानः परं विरेजे। अङ्गवक्रिमापि अविरतदर्शनोत्सुक कन्यकानेत्रपीयमान इव तेजःपुञ्जसंपूर्यमाण इव तत्तदंगेषु क्वचिल्लीन इव क्वचिदाच्छाद्यमान इव क्वचित्प्रभावितानच्छुरित इव तस्य लावण्यमतीव पुष्णातिस्म । अयञ्च शिशुरधिडोळमुत्तानशयनः मातुरुत्साहमन्यूनमकरोत्कदाचिद्भित्तिकालंबनेन सञ्चरमाणः पदेपदे पतन् पार्श्ववर्तिनीनां प्रहर्षणं जनयामास। कतिपयेषुमासेषु पात्रीहस्ताः अन्नादिकमभ्यवहारयित्रीः तिरोभवनेन व्यथयन् विचचार पुरंध्रीः । सगद्गदवचसाच वृद्धाननुकुर्वन्निव चारुभाषितुमुपाक्रमत । पांसुक्रीडायां गुप्तवस्तुनिर्भासने च परं प्रावीण्यं प्राप । विहारादिष्वपि अस्यापथसंस्पर्शनं नाभूत् । एवं कृतचौळमेनं मातामहः द्विवर्षजातेन ज्येष्ठेन श्वेतकेतुकुमारेण पुण्डरीकनाम्ना सहसमुचिते वयसि पञ्चमे उपनीयाध्यापयामास व्रतानुष्ठानं आम्नायं अङ्गानि इतिहासान् विद्यास्थानानि उचिताश्च कलाः धर्मसूत्राणि सत्तर्कान् अन्यांश्च तात्कालिकान्विद्यासमुदयान् । अयंच कुमारं पुण्डरीकमप्यतिशयानः अनन्यसाधारणेन वाग्मिताविर्भावेन वाचस्पतिमप्यवधीरयन् व्रतानुष्ठानवैखर्या च विभावसुं विप्रभं प्रकल्पयन् प्रतिक्षणं विद्याविशेषग्रहणतत्परोऽभूत् ॥ सर्वाश्च विद्याः प्राक्तनतपोमहिमसमासादिता इव स्वयमेवाविर्बुभूषवोऽपि अतिशयाधानलिप्सया केवलमाचार्यं व्याजमवलंबमानाः अचिरेणैव एकायन भेजुरेनं ॥ अयमप्यतीव चिन्तनाविशेषणासामातित्थ्यमिव कारया

मास । सोऽप्याचार्यः करुणया करतलस्थितमिव सर्वं विषयं न्यरूपयत् ॥

श्वेतकेतुपुत्रस्तु अध्ययनात्पराजितः नाष्टावक्रमनुसर्तुं प्राभवत् । ईषत्प्रकारानेव अध्यगीष्टाम्नायान् । परन्त्वसूयाक्रान्तहृदयः प्रायेणान्यनिन्दामेव कुर्वन् गमयामास कालं ॥ अष्टावक्रश्च षोडशवर्षदेशीय एव औपनिषदेष्वपि व्यवहारेषु परमं प्राज्ञभावमवाप ॥ ओषधीनाथमिव एनं सकलाः कलाः पर्यपोषयन् । विद्यासरितश्चामुं अक्षोभ्यमंबुनिधिमवगाह्यानन्दमविंदन् ॥ आचार्योऽपि समग्रकलं द्विजराजममुंपश्यन् अकूपार इवातिवेलसंतोषतरंगितान्तरंगः अवर्द्धत ॥

कहोडपत्नी तु अनवरतं आर्यपुत्रस्यागमनंचिन्तयन्ती अनवाप्य तदीयमुदन्तं ‘ कियतः कालस्य एवमविश्रममनुभूय दुःखं प्राणास्संरक्ष्याः । अतीतेषुच द्वादशसु वर्षेषु अनधिगतप्रियवृत्तान्ता वैधव्यं कर्मार्हतीति श्रूयते धार्मिकं वचनं । तथापि प्रणिधानेन तत्रभवता आचार्येण भर्तुः प्रवृत्तिस्सम्यगुपलब्धा । अत एव पितृपादाः निर्बध्नन्ति जीवितव्ये । अनतिचिरेण दुःखमुन्मूलयिष्यते इति साधुवचनेन यापिताः षोडश हायनाः ॥ न मे रोचते अभर्तृकायाः क्षणमात्रजीवितमपि । पुत्रस्य पाण्डित्योत्कर्षः किंचिदिवाश्वासयति । प्रत्यहं वर्द्धतेऽयं शशीव कलाविद्यासमृद्ध्या ॥ आश्रमधर्मानुष्ठाने विद्याग्रहणे च व्यापृतः तपस्वी मम कुमारः श्वेतकेतुमेव पितरम्मन्यमानः पितृभक्तिं दृढां बद्ध्नाति ॥ एकपदे पित्र्यं वृत्तान्तमनापृच्छमानाय निवेदनं भूयसे शोकाय भवेदिति मम प्रतिभाति ॥ उत्पन्नाशंकः कदाचित् प्रक्ष्यतीमं विषयं । आस्तां मैथिलोऽपि महाराजः सत्रकरणोत्सुकः संप्रत्यपि यथापूर्वमनुष्ठीयमानं सत्रं न समापयति स्म ॥ ततः आगताश्च आर्यपुत्रमनालोकमाना एव वार्तांकिंचन पितृपादेभ्यो निवेदयन्ति ॥ सर्वथा वैश्वानर एव मम कुशलं दास्यतीति दुःखसंविग्नमानसा अन्तर्निरुद्धबाष्पप्रसरा कथमपि जीवतिस्म ॥

जातु चिद्विद्यापरीक्षणकुतूहली श्वेतकेतुरुभौ कुमारौ अन्तिकमानीय पप्रच्छ यान् कांश्चिद्विषयान्॥ पुण्डरीकस्तु प्रत्युत्तरितुमक्षमएव अवर्तिष्ट

अष्टावक्रस्तु यथामति समाधाय तत्रैव कांश्चिदनिवार्यान् सन्देहार्थानुत्थापयामास ॥ येच श्वेतकेतुनापि प्रतिवक्तुन्नाशक्यन्त ॥ तदात्वष्टावक्रः संतोषमनुभूय "पितुरंके क्षणमुपवेष्टव्यं। विजयमानाश्च पुत्राः तमेव पारितोषिकं बहुमन्यंते । पराजितानान्तु पार्श्वस्थितिरपि परिहरणीये"ति मनसिकृत्य श्वेतकेतुं पितरम्मन्यमानः तदीयमंकमारुरोह ॥ तदानीं प्रवृद्धमन्युः पुण्डरीकः कुशाग्रीयबुद्धितां विद्याग्रहणचातुर्यं अनुष्ठानवैलक्षण्यं जितकाशिताञ्चाष्टावक्रस्यानुचिन्त्य जातेर्ष्यः प्रतिकर्तुमशक्नुवानोपि अमूमेवभ्रान्तिमवलंब्याष्टावक्रं विनिंदितुमुपचक्रमे ॥ अरे जाल्म अनवगम्यात्मवृत्तमाम्नायाभ्यसनमरण्यरोदनमिव करोति ॥ स्वीयमाभिजात्यमजानन्त एव पाण्डित्येन केवलं प्रगल्भमानाः प्रकाशन्ते प्राकृताः ॥ प्रथमतोविज्ञानस्य फलं स्वीयं परकीयंच विभज्य वेदनमिति हि सारासारविवेचायितारः संगिरन्ते ॥ पितृणामृणं मोचयितुं जायमानाः केचनामुष्मिन्निह च बंधनप्रायमप्रियमाचरन्ति ॥ क्रमेण कारामपि निनीषान्ति । ते खलु महान्तमुत्साहमर्हन्ति न भवादृशाः ॥ ये किलपित्र्येन गुणेन स्वकीयेन पाण्डित्येन पराह्लादनचणेनानुष्ठितिविशेषेण अविगीतयाच परंपरया अखिलशुभनिदानेन विनयेन च विराजन्ते ॥ सर्वथा नार्हसि मम पितुरंकमारोढुं। जातहर्षाश्च जडा जगति असीमानमेव ब[illegible]मानं लिप्सन्ते ॥ बहुधा भवान् दृष्टमहिमा ; यद्विद्याप्रवचने परीक्षायांचाखर्वमेव गर्वमाविरकार्षीत् ॥ अपि जानासि । गुरूपदेशवेळायां स्वप्स्यामि ॥ आस्तां वृथा भवतोऽन्यथाकारिणा वचनेन । इदमनुचितं; यन्मामेवमपहास्य मम पितुरंकमारुरुक्षति । विरम वृथा संरंभात् इति ॥

तद्वाच रश्मिना निवर्त्यमान इव रणवाजी वीतकर्मव्यथित इव वारणेन्द्रः शैलप्रतिहन्यमान इव प्रवाहः छपेटिकाछिदुर इव छात्रवर्गः गळहस्तिकानिष्कास्यमान इवार्थिजनः दीनदीनस्वभावः तरळनयनः विह्वलङ्गः विषण्णवदनः विनिश्वसन् अनवगतार्थश्चाष्टावक्रः "कथमिदं । कुतोवाभ्रमः । कथन्वेकपदे एवं प्रक्रमते । ज्ञात्वा खलु प्रतीकाराय प्रयति-

तव्यं सर्वथा पृष्टव्या जननी । अनधिगम्य पितुरुदन्तं तथ्येन किमिव मे जीवनेन । अमुमेव पितरम्मन्यमानः गर्हणमेवमापमिति । चिन्तासंतानक्षुभितहृदयः साश्रुभ्यांच लोचनाभ्यां श्वेतकेतुं सदैन्यमवलोकमानः मातुरन्तिकं प्रतिष्ठासुरयाचत गमनायानुज्ञां ॥ श्वेतकेतुरपि सधिक्कारं पुत्रे चक्षुर्विक्षिप्य "नहि वयसो विद्याया वा समुचितमाभाषसे । न सांप्रतमिदं व्रणे क्षारजलमासेक्तुं ॥ क्वासावष्टावक्रः प्रज्ञावान् । क्व भवान् अतिक्षुद्रधीषणो दुर्मेधाः । नहि भवतामयं दोषः । किन्तु पितॄणां; यन्मम पुर एव एवमारब्धवानसि ॥ अपचेळिमबुद्धयश्चाहितमेव जानीयुः अविनीतता च बलवती प्रतिष्ठाप्रत्याख्यानरीतिः । प्रज्ञावतामयं प्रथमो धर्मः ; यद्दोषमन्धतमसं प्रतीकार्यमिति । उदयमापन्नश्चोष्णरश्मिः प्रथमं विभेदयति वैभावरिकमखिलं ध्वान्तं ॥ रोषो हि नाम परश्शत्रुः । विशेषतो ब्राह्मणस्य । उपशमहीनेन चेतसा वृथा वहसि व्रतिनामकल्पं । अतिरोषणश्चान्धएव ॥ तदपसर । मा मम समीपं गमः इति पुण्डरीकमवज्ञाय साधु अष्टावक्र साधु अचिरेण तव पिता आयास्यति ॥ मा वृथा आयस्यः । गच्छ उटजं । व्यपोहय शुचं । न खलु धीराः कदापि वैक्लव्यमुपयान्तीत्यनुजज्ञे गमनाय ॥

अष्टावक्रश्चोटजं प्रविश्याभिवाद्य सगद्गदं मात्रे वृत्तं सर्वमावेद्य पितुरुदन्तं तत्वतो बुभुत्सुः प्रार्थयामास ॥ सा च द्विगुणितशोकावेगा संक्षिप्येत्थमवोचत् "भवतः पिता प्रथमाश्रमे पितुरुद्दालकाचार्यस्य परिचरन् विद्या इव मामपि पर्यणैषीत् ॥ जातगर्भया च प्रेष्यमाणो नृपसभं गतो विद्याकलहेन वन्दिना विजितः तत्रैव परिचरती"ति ॥ तदाच कुमारः विद्यायोधन कुतूहली आहस्म "प्रस्थापय मां विचार्य वन्दिसभां विन्देय ॥ कोनुखलु वर्तते मामपि जेतुं । सर्वधा पिता मे परिचर्यातो निवर्तिष्यते ॥ मा च मां प्रथमवयसा संशेष्व । फलेन प्रवृत्तिः प्रदर्शनीया न वचनेन ॥ दीयतामाज्ञया सह पाथेयमिति ॥

मातापि बालिमानमपत्यस्य प्रौढिमानंच विद्यायायाः चिरादर्शनं प्राणवल्लभस्य अनतिदूरवर्तितांच नृपसभस्य असहायतांचाष्टावक्रस्य चिन्त-

यन्ती प्रास्थानिकानि च मङ्गळानि रचयन्ती अपारयंती शोकनिरोधे शुभोदर्कमुत्पश्यन्ती कथं कथमपि द्रढयन्ती चेतः पाथेयमनुबद्ध्य द्वारमनुव्रज्य समालिंग्य मूर्ध्नि उपाघ्राय आशिषः प्रयुज्य प्रस्थापयामास पुत्रकं ॥ शुभशंसीनि च विहंगमरुतान्यश्राविषत ॥ मधुरतमं चुकूज कोकिलः। मन्दमनुकूलंच ववौ समीरणः ॥ साक्षतहस्ताश्च तापससुमंगल्यः पुरतः प्रादुरासन् । विस्मृतनिमेषेण चक्षुषा विलोकमानायांच तस्यां प्रतिष्ठमानः प्रणम्य पुरातनान् समालिंग्य सुहृदः आमन्त्र्य वनदेवताभ्यः पथिकमुखेन पन्थानं विचारयन् विनीतवेषः विग्रहवानिवाचारः विद्याविनोदनाकुलितचित्तः विहायविषादं विश्वस्तविजयः व्यगाहत वनं ॥

स च पन्थानमवतीर्य सरसीष्वमृतमादधानः वन्यद्रुमाणां वैचित्र्यं विचिन्तयन् समन्तादाहिण्डमानेभ्यश्च तरूणान्नामानि परिपृच्छन् मृगयाव्यग्रतरव्याधमुखेन मार्गसंशयं छिन्दन् कल्हारामोदानाजिघ्रन् समुच्छितनीवारदर्शनेनारण्यकसंपत्तिमभ्यूहन् विश्वस्त मृगपोतक निचयेनाश्रमभुवं साधयन् वृक्षवाटीनिवहेन जानपदसान्निध्यमाशंकमानः अतिलंघयामास गन्तव्यमध्वानं प्रायः ॥ सायंसन्ध्या च प्रादुरभूत् । तदानीञ्चाष्टावक्र इव सञ्चारश्रान्तः पाश्चात्यं अर्यमा गिरिमध्यशेत ॥ वन्दिसभेव अष्टावक्रं प्राचीदिगपि द्विजराजं प्रतिपालयन्ती बभासे ॥ अष्टावक्रहृच्छोक इव प्रभूतमभूदन्धं तमः । प्रभापटलमिव समकुचत् पन्थाः। पन्थानश्च पाणिंधमास्संवृत्ताः । पंकजानि वैमुख्यमुपजग्मुः । किञ्चिदिव नाक्षत्रं तेज आविरासीत् । योगिन इव शकुनयो निश्शब्दा अभूवन् । तदा परिसमाप्य सायन्तनविधिं पाथेयापहृतपरिश्रमः पद्मिनीं समया परिदृष्टे कस्मिंश्चिन्मण्टपे शयित्वा त्रियामांत्रुटिमिवात्यवाहयदष्टावक्रः ॥

प्रभाते च कृताह्निकः उपकण्ठे एव मैथिलस्य राज्ञो भवनं यज्ञशालांचावगम्य त्वरिततरया च गत्या अनतिविस्तीर्णं राजमार्गं कंचनावगाहमानः दूरादेवागतं बध्यमानाश्वगोयुगं उत्क्षिप्यमाणकेतुं उद्धूयमानवाजिकर्णचामरं परस्परताच केनचिद्वेत्रधारिणा अपनीयमानमानुष्यकं सुवर्ण-

भासुरं रथं तदन्तश्च विराजमानकुण्डलं विस्मितवदनं प्रभुतासमुचितपर्यंत-वीक्षणं कार्यगौरवाद्यप्रचिरं युवानं कंचनमैथिलराजबन्धुमपश्यत् ॥ पुरस्सरपरिजनप्रतिबोधितः यावदष्टावक्रः अपरिशुद्धतयापार्श्वभागस्य, मध्येपथमेवावजगाहे तावत् अन्तस्थितः सराजापि आदिक्षत् अमुं पन्थानं प्रतिपद्यस्वेति ॥ उदितप्रतिघश्च मुनिकुमारः "आज्ञा हि नाम पुरुषस्य नियम्यवर्गेषु परिदर्शनीयः कश्चिदहंकारग्रन्थिः ॥ मानिनां तु मानप्रक्षाळनं । अज्ञानां आचरितव्यार्थप्रदर्शकः विधिविशेषः । प्रायेण उचितमनुचितं वा स्वीयानेवार्हान्ति जनानाज्ञापयितुं । न परकीयान् ॥ सभक्तिकैः सभीकैर्वा राजाज्ञा मालेव शिरसा धार्यते । समुचितमाज्ञापयितारः साधवस्समभ्यर्ह्यन्ते । विपथं प्रवर्तयितारो विषीदन्ति । नहि स्वस्यमस्तीति सर्वेप्याज्ञापनीयाः । किन्न श्रुतः ब्राह्मणे कृतनिदेशः अजगरतामापन्नो नहुषः । व्यध्वगामिनां खलु राजा दण्डधरः । सति पथि संचरन्तस्तु गुरव एव राजकस्य । साधुगच्छन्तो महागजाः न वीतकर्म सहन्ते । अवदातपथप्रवृत्तेषु क्रियमाणश्चादेशः आदेष्टुरेव अविमृश्यकारितां आवेदयेत् ॥ तदलमाज्ञया । नखलु राज्ञां पथश्च तावान् संबन्धः । असान्निपाते एव राजानः प्रभवन्ति पथः सन्निपाते च प्राथमिकं स्वाम्यं ब्राह्मणस्य ॥ श्रूयतामत्र व्यवस्था ॥

**अन्धस्य पन्थाः बधिरस्य पन्थाः ।**
**स्त्रियः पन्था भारवहस्य पन्थाः ॥**
**राज्ञः पन्था ब्राह्मणेनासमेत्य ।**
**समेत्य तु ब्राह्मणस्यैव पन्थाः ॥**

इति युवराजं साधु अन्वशात् ॥

राजापि प्रतिष्ठाप्य रथमवतार्य कृतप्रदक्षिणोऽभिवाद्य मुनिं सान्त्वयन् सन्निहितांच मैथिलसभां प्रदर्श्य अगाद्रथेन ॥

विष्फारितवीक्षणश्चायं पर्यंतोच्छ्रीयमाणकेतुनिवहान् गन्धतोयोक्षितपांसून् परिष्कारविस्तृतान् विपणिपथान् स्वस्वव्यापाराकुलैः श्वेतकंचु-

कावृताङ्गैः राजकीयैरनवरतमभिवीक्ष्यमाणांश्च पर्यंतमार्गान् महाप्रमाणैः भित्तिमण्डलैः अगाधयाच परिखया परिकलितप्रान्तभागां इतस्ततश्चाहिण्डमानैः सेवकजनैः निबिडितद्वारप्रदेशां अरण्यानीमिव वेत्रिपरिचरितां पाताळभुवमिव भोगिसंकुलां खनिमिव सर्वरत्नानां प्रसवभूमिमिवप्रश्रयगुणस्य परिष्कारफक्किकामिव पण्डितमंडलस्य शेखरमिव साधुशब्दरत्नवादानां निकषोपलमिव विद्यामणीनां समुचितासनप्रसाधितां शकटीशतविराजमानप्रान्तभागां काञ्चनसभां, तां समया समाहितचेतोवृत्तिभिः अनवरतप्रैषविधानव्यग्रहोतृगणैः दक्षिणातिक्रमणपटुतरपादयुगळैः पटुहस्तैश्चाध्वर्युभिस्समिध्यमानाहवनीयैः यजमानशिक्षणावधानिभिश्च ब्रह्मप्रमुखैः परिकर्जितं बर्हिःपूलीभिः अभितःप्रकीर्णं होतृषदनवेदिकादीप्यमानं यूपखननोचितान्तर्वेदिभागं पूतभृदाधवनीपात्रपरिष्कृतान्तर्वेदिं चतुरश्रचात्वालालंकृतं यज्ञवाटञ्चापश्यत् ॥

चित्रीयमाणहृदयश्च अष्टावक्रः जातसंरंभः त्वरितमेव वंदी निग्राह्य इति निश्चिन्वन् यज्ञवाटस्य द्वारमगमत् ॥ तदाद्वारे नियुक्तः वंदिच्छात्रेष्वन्यतमः "आः विद्वान् अबहुद्रष्टा युवा कश्चन अष्टावक्रनामा आकृत्या रूपेण वयसा अपरेणापि प्रकारेण खर्वतामेतीति सधैर्यावष्टंभमनादरेण उपहसन्मुनिकुमारमेवमवादीत् ॥ अये कनीयो भ्रातः किमत्र चक्षुरतीव विक्षिपसि । कथन्तवाकारसौभाग्यमित्थमभूत् । षोडशवर्षदेशीय इवाभासि ॥ न ते रूपस्य सौष्टवमल्पीयोऽपि । मन्ये च भवन्तं किञ्चिदज्ञमेव । विकस्वरविद्यापरिमळा वृद्धा एवात्र प्रवेशमर्हन्ति । न भवादृशाःस्तनन्धयाः । तादृशा अपि विबुधवराः अस्मदाचार्यवंदिनः सकाशादवाप्तपराभवाः न जाने कुत्र गताः इति ॥ न खलु वंदिन इव वाग्मिताविलासः कस्यचिदुत्पन्नः उत्पत्स्यते वा ॥ बहवस्तु वन्दिनमेनमवतारपूरुषमभिप्रयन्ति । अवधेहि । वृथाभ्यन्तरं प्रविश्य वन्दिना पराजितो मुधाजीवनो माभूः ॥ न पारयामि इतोप्यधिकमुपवर्णयितुं । अतोनिवर्तस्वास्मात्प्रदेशात् इति ॥

अष्टावक्रश्च चतुरमाचचक्षे । अये दौवारिक किं लक्षणं मनुषे

वृद्धभावस्य । श्रुणु नहि परश्शतसमादर्शिनः न वा पलितपाण्डुरमुखाः नापि स्खलद्गतयः दण्डधारिणः नैव लंबमानकूर्च्छाः प्रह्वीभूताः नापि शुष्यत्त्वचः पाण्डुरोमाणः वृद्धा भवन्ति ॥ क्व तादृशं ज्ञानैकसाध्यं वृद्धत्वं क्व एतानि अतिक्षुद्रतराणि बाह्यानि चिह्नानि ॥ अबहिस्सञ्चारिणः अन्तस्थितमेवाल्पधियं वाचस्पतिं मन्यंते ॥ तारामैत्रीप्रकटनेनापि केषांचिश्वेतमाना यशोवितानसंपत्तिः ॥ न केवला विद्या पुरुषस्य यशो वित्तं सौभाग्यंच दातुमलं ॥ अविदुषश्च बहुधा विस्तृणीते विततं यशः । जन्मान्तरकर्मानुविधायीनि खलु संपद्यन्ते सुखमसुखं लाभः क्लेशः यशः संपद्वा ॥ नमेऽस्ति कश्चिद्विद्यायां प्रतिकोटिनिर्वोढा । प्रस्थितश्चाहं वन्दिविजयाय । न खल्वधीराणामिव अकालिकमुद्यमं साधु भवेत् ॥ अल्पज्ञाश्च बहुधा विकत्थमानाः फलेभ्यो दवीयांसः पतन्ति वृथापरिश्रमाः ॥ सति च विवादे सर्वं ज्ञास्यते । मा भवानभ्यन्तरो भूत् । न हि रूपं कुलंशीलं वा विवादे विजयं वितरन्ति ॥

ततो दौवारिकश्च आकारे खर्वतां ज्ञाने विपुलतां वयसि बालिमानं वचसिप्रौढिमानं हीनतामंगेषु उत्तमतां विवादनैपुण्ये अल्पाक्षतां मुखे दीर्घदर्शितां धियि माधुर्यं मृदुभाषणे मर्मभेदितां तात्पर्यार्थे विचिन्त्य "न केवलमयम्मानुषः किन्तुवंदिपराजयाय सृष्टः विबुधमणिः । नार्हामि मुनिकुमारमन्तर्जिगमिषुं निरोद्धुं ॥ वर्द्धतां विवादः । स्पृहयामि च महते विचाराय । अयञ्च न विरमेत् कल्पनामार्गेषु सर्वथा अनिवेद्य राजानमैन्द्रद्युम्निं प्रविविक्षामस्य पूरयितुञ्च नार्हामिति निश्चित्य प्रविश्याभ्यन्तरं राज्ञ यथायथं निवेदयामास ॥ तत्रभवान्सुगृहीतनामा ऐन्द्रद्युम्निरपि तादृशमेकंविद्वांसं दिदृक्षुः प्रवेशयामासाष्टावक्रं ॥

प्रविशंश्चायं उपेत्य राजानं "भवान् किल यायजूकानां धुरि ययातिरिवाभाति। यतो विनाचांगलोपमध्वरानुष्ठानन्नामानभ्रवर्षणं। पूर्णतुन्दाः पूजिताश्च ब्राह्मणाः यथामनोरथमाकांक्षन्ति श्रेयः । श्रूयते साच महासभा यत्र पराजितानां सलिलमज्जनमेव दण्डः। वन्दीच कश्चन विद्वन्मातंगो

विजयते भवतामुपकण्ठे । सोयमाभाष्यः किञ्चिदिव ॥ अनुज्ञा दीयतां विद्याविचाराय । आत्मीयं बलमवधारयन्तो हि यतेरन् विजयाय । इत्युक्त्वा राज्ञानिर्दिष्टे प्रदेशे उपाविक्षत् ॥

ऐंद्रद्युम्निश्च वंदिनः कौशलं वर्णयन् बालकस्यास्य वादानर्हतां संदिहानइव पृच्छातिस्म "आर्य कस्मिन् शास्त्रे भवानधीती, क्षमश्च विवदितुं ॥ एकत्र किल स्थेयान् आदरः कार्यः । यत्र क्रियमाणश्च सर्वत्र फलिष्यति । वंदिनस्तु सर्वत्र विसृत्वरीधिषणा इति ॥ अष्टावक्रस्त्वाह कृतः परिचयः सर्वेषु विद्यास्थानेषु ॥ वेदान्तविचारणमेव प्रधानं कर्म ब्राह्मणानां । अतो ब्रह्माद्वैतं कथयितुमागतोस्मीति ॥

सच राजा वचसा अस्य वैदुष्यं जानन्नपि कीदृशोस्य व्यावहारिक प्रज्ञासमुन्मेष इति ज्ञातुमिव कञ्चनप्रश्नम करोत् ॥

**षण्णाभेर्द्वादशाक्षस्य चतुर्विंशतिपर्वणः ।**
**यस्त्रिषष्टिशतारस्य वेदार्थं स परः कविः ॥** इति ॥

अष्टावक्रश्च अहोममाद्वैतकथने संकल्पो । राज्ञोभावबंधस्तु कालचक्रं कलयति ॥ यत्षण्णामृतूनां द्वादशमासारंभकता । ततो नाभिशब्देन निर्दिश्यते । कठिनतरेष्वक्षेषु दृढन्निखन्यमानाश्च सपर्वाणो दण्डा अराणि प्रकल्पयंति ॥ द्वादश च मासाः चतुर्विंशत्या पक्षैः सांवत्सरिकादीन्विभजन्ते इति ॥ औपनिषदपरतयापि अर्थविशेषः मम भाति । महदादयश्चतुर्विंशतिः पर्वभाघमर्हन्ति । प्रपञ्चविस्तारयितृभावश्च साधारणो धर्मः । ज्ञानशक्त्यादयश्च षट् सर्वगुणानां आधारभूताः ॥

**धर्मश्च सत्यञ्च दमस्तपश्चा मात्सर्यं ह्रीस्तितिक्षानसूया ।**
**यज्ञश्च दानञ्च धृतिर्यमो महान व्रतानि वै द्वादश ब्राह्मणस्य ॥**

इति प्रतिपाद्यमानागुणाः ब्राह्मण्यमतीव वर्द्धयंति । समधिकाश्च गुणाः क्रमेण ब्रह्मभावं कल्पयेयुः इति मन्वानः प्रत्याह अष्टावक्रः ॥

**चतुर्विंशति पर्वत्वां षण्णाभि द्वादशप्रधि ।**
**तत्रिषष्टिशतारंवै चक्रंपातु सदागति ॥** इति ॥

राजाचाष्टावक्रस्याविगीतमाशयमौपनिषदार्थानुबंधिनं विज्ञाय आत्मनः प्रकृतिसंबंधं पिपृच्छिषुः बाह्यार्थदृष्टांतमनुगुणमाकलयन् आहस्म ॥

**बडबे इव संयुक्ते श्येनपाते दिवौकसाम् ।**

**कस्तयोर्गर्भमाधत्ते गर्भंसुषुवतुश्चकम् ॥** इति ॥

हन्तहन्त राज्ञ आशयगांभीर्यं । यद्बाह्यार्थे विहायस्सञ्चारिभिः नित्ययुक्तोऽकस्मात्पतनशीलोधूमसलिलसन्निपातरूपोमेघः प्रतिपाद्यते । तत्रच गर्भं वैद्युताग्निरूपः उत्पादयति । उभयोश्च सकाशात्स्वयमेव पततिवैद्युताग्निरित्यस्यानुगुणं आन्तरार्थमेतं जीवप्रकृतिसंबन्धमपि सनिमित्तमाविष्कुरुते । उभय विषयेप्यस्य समुचितमुत्तरंदित्सन्नाहस्माष्टावक्रः ॥

**मास्मभूत्वद्गृहे राजन् शात्रवाणामपि ध्रुवम् ।**

**वातसारथिराधत्ते गर्भं सुषुवतुश्चतम् ॥** इति ॥

श्रुत्वाच प्रतिवचनं प्राप्तहर्षश्च राजा ब्रह्मविषयकमेकमेवान्त्यं प्रश्नं प्रकाशयामास ॥

**किं स्वित्सुप्तन्ननिमिषति किं स्विजातन्नचोपति ।**

**कस्य स्विद्धृदयन्नास्ति किं स्विद्वेगेन वर्द्धते ॥ इति ॥**

अहो कवेश्चातुर्यं । ब्रह्मविषयः प्रश्नः समग्र उपायविषयश्चैकोभवतीति साधु आन्तरमर्थं बाह्यञ्च यथाश्रुतार्थं विज्ञाय प्रयुङ्क्ते प्रश्नवाक्यं राजा । सर्वथा अतीवास्य मेधाविशेषः । अतोत्र जागरूकेण प्रतिवक्तव्यं । स्खलद्वचनाश्च पराभूयन्ते । उभयार्थानुगुणमेव उत्तरं वक्तव्यमिति मनसिकृत्य उत्तरयतिस्म ॥

**मत्स्यस्सुप्तोननिमिषति अण्डं जातन्नचोपति ।**

**अश्मनोहृदयन्नास्ति नदी वेगेन वर्द्धते ॥** इति ॥

राजाच इत्थमात्मनि अष्टवक्रस्य वचनमवगतार्थमकरोत् “ सुप्तास्सर्वेपि न निमिषमाचरन्ति । जायमानाश्च घटादयो नैव चेष्टन्ते नवा वृद्धिमुपयांति । अचेतनानां सर्वेषामेवाशयः न दृश्यते । वेगेन विवृद्धिश्च न व्यभिचरतीतिसामान्या जानीयुरेव । अथाप्ययमष्टावक्रः

ब्रह्माद्वैतवादी नकदाचिदेवमर्थं प्रत्युत्तरेत् । मयापि ज्ञायते ब्रह्मविषयकस्समाधिः । आस्तां। कथंप्रबोधयति मुनिकुमारः औपनिषदमर्थमनेन उत्तरेण । नैवं वंदिनो वाग्मिताविलासः अतोत्रग्राह्यवचनएव इति "आर्य अष्टावक्र कथमिदमुत्तरमव्यभिचरितार्थः भवेत् । कथंवाभवदीया प्रतिज्ञा निर्व्यूढा भविष्यति भवदीयवाग्विलासश्च शुश्रूषुतामभिवर्द्धयति । व्याख्यायतामिति । राज्ञा प्रार्थितः स मुनिकुमारः सविस्तरमाहस्म ॥ मत्स्यपदञ्च हर्षेकतानं निरस्तनिखिलदोषं अपास्ताविद्यासंबन्धगन्धं स्वप्रकाशं ब्रह्मप्रतिपादयति। तादृशञ्च ब्रह्म स्वाप इव सदानन्दमनुभवन्निष्क्रियं वर्तते ॥ तदतिरिक्तानि च सर्वाण्यविद्यासंबन्धेन क्लिश्यमानानि क्षणमप्यविकाराणि न दृश्यन्ते ॥ जातञ्च परिदृश्यमानं सर्वमपिजगत् परमार्थतो विवृद्धिंवगच्छति ॥ ज्ञानिनोहि चिन्तयन्तः विज्ञानबलेन विधूतमायाः वितथमेव इदमवगच्छन्ति । अविद्वांसस्तु परम्मुह्यन्ति । अश्मवदचलयोगभाजः प्रतिबन्धकं वस्तु नकिमपिपरिदृश्यते । नवा गीयते । मनसः परं किञ्चनवस्तु समस्ति प्रतिबन्धकं ॥ तदपि निरन्तरधारणाभाजां नाचरति कामपि पीडां । परन्तु कदाचिदुपकुर्यादपि ॥ श्रूयते च विशीर्णहृदयग्रंथिः तस्मिन्दृष्टेपरावरे इति॥ नदी, समृद्धिमान् नित्यानन्दाननुबुभूषुः सतताभ्यस्यमानेन योगेन ईप्सितमधिगच्छति ॥ अत्रच यथायथं औपनिषदार्थः भवतः प्रश्नानुरोधेन प्रतिपादितः । अस्य राजकुलस्य एवम्महिमा श्रूयते । यज्जनकास्सर्वेपि ब्रह्मविद्यापारदृश्वानः इति । तत्रान्ववाये लब्धोदयाभवादृशा एवार्हन्ति स चमत्कारमन्यान् प्रष्टुम् । प्राकृतास्तु प्रापञ्चिकानेव विषयान् बहुव्यभिचरितान् परिपृच्छन्ति ॥ अतो विमृश्यताम्मदुक्त उत्तरः । उद्दालकाचार्याश्च मम उपदेष्टारोऽनिगूढेष्वौपनिषदार्थेषु ॥ सम्यञ्चस्संप्रदायतीर्थावताराः न कदापि व्यतिविद्गते इति ॥

ततोजातानन्दश्च स मैथिलः यथार्हमर्हणां विधाय प्रह्वो मुनिकुमारमवदत् "वयश्च प्रथमं विषयाश्च वीतरागिणामपि दुरवगाहाः प्रश्नश्च वक्रिमिमोक्तिविलसितः अतिगंभीरश्च उत्तरदानप्रकारः । सर्वथा नभवान्मा-

नुषः । मन्ये जगतस्समुद्दिधीर्षयावतीर्णमब्जविलोचनमादिमं पूरुषं ॥ नखलु केवलाः मानवाः शक्नुवन्ति भ्रमविप्रलंभादिभिः शून्यमौपनिषदमर्थमवगन्तुं ॥ ब्राह्मीच मेधा अकृतपुण्यानां अब्राह्मणानां असाधूनां कदाप्युदयमासादयति ॥ वृथापरिक्लिश्यन्ति व्याकरणे छन्दसि वैषयिकरसप्रचुरेषु विद्यामार्गेषु ॥ अगृहीतब्रह्मविद्यश्चान्ध इवार्हति कूपपतनं । सभ्यश्च वन्दी संप्रतिजितप्रायो भवता । सतु जानन्नपि नमेधयानुसरिष्यति भवन्तं समुचितैव ते विद्याकंडूतिः । संप्रतिसाधुंपश्यामि प्रपञ्चमपि । यदत्र भवादृशा जनिमभ्युपयन्ति ॥ आत्मानं सभां यज्ञं अन्यच्चास्मदीयं सर्वमपि भवतस्समागमेन कृतार्थं आनन्दतुंदिलमपास्ताभाग्यमश्रुवार्द्धिवृद्धिंच पश्यामि । अचिरादेवानीयते वंदीति । द्वारपालकमुखेन वंदिनमवगतार्थमानाययति स्म अधिसभं ॥

आनीयमानश्च वंदी इत्थं विचकत्थे । कः परात्मपरिमाणविवेकशून्यः शालभीं वृत्तिमात्मनो लिप्सते ॥ कोवा जाग्रतः मत्तमातङ्गसहस्रमर्दनसमुद्गतविस्रास्राविचित्रितात् मृगेंद्रान्निर्भीकोदंष्ट्रामपजिहीर्षति ॥ कः खलु फणामंडलभीषणंप्रदाकुप्रधानं पदा परिबिभावयिषति । कोनुवा कठिनतकठोरतरग्रावव्रातप्रघटितप्रदेशे महामहीध्रे मुष्टीमुष्टि जन्यं चिकीर्षति ॥ कोवा मध्यप्रदेशमन्दानितमहीयाश्शिलासारनिकरः महान्तमुदन्वन्तम् मङ्क्षु दोर्भ्यां तितीर्षति ॥ कोसावष्टावक्रः । नामैवप्रथमतो वक्रिमाणमवगमयति । आगताश्च विद्वांसस्सर्वेपि सलिले मज्जिताः पाताळमेव समाश्रयन् । अयमप्येको निमङ्क्ष्यतु महोदधौ । इति वदन्नेव प्रविश्य उपराजमुपाविशत् ॥

तदाच सभास्तारास्सर्वेपि हाहाशब्दमुखाः संघीभूय दिदृक्षवः बद्धकक्ष्याः अन्तिकमासेदुः ॥ राजाचाष्टावक्रं पुरस्थितं बालकान्निर्दिश्य अनेनारभ्यता मौपनिषदे पथि व्यवहारक्रमः । उक्तेच प्रत्युक्तिरादातव्या नोचेत् जित इति सन्धापुरस्सरं वंदिनमनुदत् । इत्थं परस्परमुपजातामर्षयोर द्वैतमधिकृत्य विवादो महान् समभूत् । यश्च खलु विवादो विदितवेदितव्यानां विदुषामपि विषयविवेचनाकौशलचणां धियं परिक्लेशयति ॥

यश्चानुक्षणमादरेणाभ्यस्याभ्यस्य सरसमनुभवतां प्रतिपाद्ये ब्रह्मण्यपि प्रायेण परिहीयते परमानन्दभरमधुरिमा ॥ येनचाद्यावधि विवादवैखरी विराजते विशिष्टक्रमा । यस्मैच स्पृहयति विद्यापयोधिसमुत्थतत्वामृतास्वादलब्धशेमुषीवैभवाः कर्कशतर्कमार्गप्रधावनजंघालपांडित्यप्रहरणावलंबिनो लब्धमर्यादाश्च लब्धवर्णाः । यस्माच्च नवनवोन्मेषधिषणाविशेषशालिनो विचक्षणा विविधांश्च बोद्धव्यार्थान्विनाश्रमं विदांकुर्वन्ति ॥ यस्यप्रक्रमश्च बलिहननप्रसारित त्रिविक्रमपादप्रक्रम इव कुत्रचिदवाङ्मनसगोचरः परं ब्रह्मी भवति ॥ यस्मिंश्च अप्रतिपादिता अर्थाः अनाशंकिता आशंका अप्रतिसंहिता आक्षेपाः अनुद्धृताश्रुतयश्चान्यत्र न दृश्यंते ॥ एतादृशे च विवादे समारब्धायां वर्णनपरिपाट्यां तस्यतस्योपन्यासे तमेवराद्धान्तमारचयन्तः महान्तः पंडितप्रकाण्डा अपि नालमभूवन् विशिष्य विज्ञातुं विनाश्रमेण सामाजिकेषु । वंदी च विख्यातः कथमस्माच्छिशोः बिभियात् ॥ स एव विजेष्यते इति केचित् । अन्येत्वष्टावक्रोयन्नमानुषः आकारातिशायिनीच विद्यासंपत्तिः सवधानायं पराजितो भविष्यतीति । अपरेतु वंदितेजोविशेषवर्णनव्यापृताः विजयमस्यैवमेनिरे ॥ अभिजानन्तश्च अर्थगौरवेण दृष्टान्तसाधुभावेन अनधिकपदप्रयोग कौशलेन अभिमतार्थबोधकदर्शन सामग्रीसमुपन्यसनसम्यक्तया चाष्टावक्रीयपक्षमेव विजयिनं व्याचख्युः ॥

इत्थमसिधाराव्रतानुकारिण्यां विवदनसरण्यां झटिति प्रतिवदमानयोश्च तयोः * त्रयोदश्यां परिपाट्यामर्धमुपक्रम्य सदृष्टान्तं सानुबन्धञ्च साभूत्तरं भाषितुमपारयन् खमूचनसमुच्छ्रित ग्रीवाभागः निष्पन्दतराबद्ध्यमानैकलक्ष्यं पश्यन् समाधिकाङ्क्षिनिश्वाससन्ततिं नीरंध्रांनिष्कासयन् वंदी क्षणं कलां मुहूर्तञ्च तूष्णीमवातिष्ठ ॥ तदा साभिमानं साधुस्वमात्मानं श्लाघमानः अष्टावक्रः तदुपक्रान्तमर्थमन्यूनयैव वृत्तसरण्या झटिति पर्यपूरयत् ॥ तत्रच माध्यस्थं पदमधिवसन्नैन्द्रद्युम्निः साधु अष्टावक्र

* इयं परिपाटी महाभारते वनपर्वणि द्रष्टव्या प्रश्नोत्तरयोः । व्याख्यानन्तु बहुभिः कृतंदृश्यतां ॥

साधु त्वं किलावनितलमवतीर्णः वाचस्पतिः। येन भवदीया कल्पना न मुधा मृषावा भवितुमर्हति ॥ जगति जीर्यत्सु विद्यास्थानेषु परित्राणाय किल भगवान् अवतरतीति कस्यवानविदितं। आकृत्यामेव खर्वतांभवतः पश्यामि नैवमियतः कालस्यापश्यम् कञ्चन वाग्मिनं विद्वांसं व्यवहरणचातुरीधुरीणं ॥ अद्यैव वसुन्धरासर्वतः परिपूर्णा। संप्रत्येव मम प्राक्तनास्सदाचाराः समग्रफलदर्शिनोऽभवन् ॥ इष्टानिपूर्तविधयश्च प्रभूतानि प्राचीनैः प्राज्ञैभिः प्रणीतानीतिनिर्व्यभिचारान्निश्चिनोमि ॥ सर्वदा सर्वत्र सर्वथापि विजयिनं भवन्तमेव मन्ये ॥ अङ्ग भवानेवास्य राज्यस्य कुटुंबस्यामीषां परिजनानां समग्रवित्तस्य कोशस्य साधुसमारब्धायाश्च सभायाः विद्यावल्पदुर्निरीक्ष्यस्य वंदिनश्च परमो नाथः। "यद्वस्तु यथाप्रकाशते तथा तत्कर्मक्रियतां। उचितश्चायमवसरः द्वैतियीकमाश्रममुपगन्तुं। अथवा के वयं सर्वथा भवान्नः प्रभुरिति अलमतीव वाचां विसर्गेणेति उपसञ्जहार ॥

हन्तहन्त कथं वंदी पराजितः। कथमष्टावक्रोविजिग्ये। केन हेतुनास्यवन्दिनः प्रातिभञ्चक्षुर्न्नोदञ्चति स्म। कल्पनाकल्पवृक्षश्चासौ मुनिकुमारकः। इत्येवंप्रायाः सभास्ताराणां व्यवहाराः प्रबलाः प्रादुरासन्। वंदी विजितोपि न विषसाद। यतः अधिकविद्यावतां भुरि अल्पज्ञाः सहजमूकाभवन्तीति न्याय्य एव लोकवादः। नह्युदयमानसहस्रकिरणे ज्योतिरिङ्खणप्रकाशमुपलभामहे। अर्हत्ययं माणवकः विद्याः प्रवक्तुं। जितोहं किमनुष्ठातव्यमनेन। आर्यएन्द्रद्युम्ने प्रकल्पय प्रायश्चित्तमात्मकत्थनस्य ॥ प्रवीणश्चासौ मुनिदारकः। इति सलज्जं सावष्टंभञ्च राजानमष्टावक्रञ्चावलोकमानः क्रियासमभिहारेण अवदत्। तदाचाष्टावक्रः पितृमज्जनजनितरोषाभिताम्रेक्षणः महोरग इव उच्छ्वसन् प्रस्फुरितोष्ठपुटः राजानमवलोक्य "कार्यतामयं वंदी तमाचारं। यश्चानेन पराजितानामनुष्ठापितः अभूत् ॥ इति स गौरवावष्टंभमुदीरयामास। इत्थं अभिहितश्चवारुणिर्वन्दीविनयेन विज्ञापयतिस्म विदुषाम्मध्ये। "तत्र भगवान् किल वरुणः द्वादशवार्षिकसत्रं माजिहीर्षुः पारदृश्वनः परमब्राह्मणान् प्रापयामुंल्लोकं। त्वया किल प्रथमं

जनकयज्ञेसभ्यपदमंगीक्रियतां । यत्र समागताः विशिष्टाः शिष्टाश्च परीक्षणीयाः संभविष्यन्ति । एवं परीक्ष्यनिमज्जनाचारेणाधः प्राप्यमाणैरविघ्नमनुष्ठास्यते अध्वरः । इति सहेतुकं न्ययुंक्त । सच मे पिता । सर्वमपीदं तदर्थं मयानुष्ठितं युज्यते एव पितुराज्ञामनतिलंघयतः पुत्रस्य ईदृशोप्याचारः ॥ इतोगताश्च ब्राह्मणाः प्रायेणात्रागमिष्यन्ति। अध्वरसमाप्तिश्चाद्यैव जातेति तर्कयामि ॥ अमुमुदन्तमवगत्यावधार्यच मम विधेयः पराजयांकः कोपि । यदिचेद्दृयन्ते मयि तर्हि बहूपकृतमिति सदीनं वदति वंदिनि अष्टावक्र आरेभे वक्तुं ॥ आर्याः सर्वेप्यवहितास्थ । इतः पूर्वं समागताश्च महान्तः ममान्यूनवचस एवाभवन् । नाहमागतो वंदिनं विजेतुं । मम च पिताऽनेन मज्जितो वर्तते कुत्रापीति ब्राह्मणवाक्यादवागच्छं । किं जातेन तेन पुत्रेण । येन पितुरीषत्करोप्युपकारः नाचरिष्यते । अपत्यं तदेवेति मुनयस्समामनंन्ति । येन जातमात्रेण प्रवृद्धेन वा कुलस्य पितुर्वा महदृणमपाक्रियते ॥ न पातयतीत्यपत्यं सार्थमाहुः । नान्तरीयकश्च वंदिपराभवोपि मे प्रयोजनपदमधितिष्ठाति ॥ अहंकारग्रंथिनिबिडितान्तःकरणाश्च न विरमंति विवक्षितमलब्ध्वा ॥ शिशोरपि मम वचनं साधु भवतामामोदाय भवत् । सत्सु बहुषु व्यवहर्तृषु सगद्गदं वदितरि बालके एव बलीयान्प्रमोदसंभारः ॥ दृश्यतां किशोरशुकस्य वचसि अनितरसाधारणा प्रीतिः ॥ नापि विरुद्धमाभाषितं श्रुत्यादीनां । यथा शिक्षितमाचार्योद्दालकेन तथा व्यवहृतं । परन्तु चेतस्संरंभः न विरमति । अयमपि वारुणिः यथावद्धर्मं आचरितुमर्हति । पराजितानां कृते अभ्युपगतः ग्लहः सर्वैरपि अवश्यमनुष्ठेयः । अन्यथा न शाम्यति कृतमज्जितानामर्हानः पराभवः । अतोत्राजिगमिषवोपि पूर्वमज्जिताः पितृप्रमुखाः उत्तिष्ठेरुरुदकात् । वक्रवचनश्च वंदी अन्तर्जले मज्जयितव्यः एवंतिसाक्रोशं समापयत् वचनम् ॥

एवं विरतवचने मुनिकुमारे वंदीत्थंप्रत्यभाषत "सलिलमज्जनन्नाम न मे प्रतिभयावहं कर्म ॥ यतः अहं सलिलाधिपस्य वरुणस्य सुतः । न मां पीडयेयुः आन्तराणि बाह्यानि वा स्थानविशेषप्रतिष्ठापितानीन्द्रिया-

णि ॥ भवतः पितृप्रमुखाश्च द्विजातयः प्राप्तसम्माननाः संप्रत्येव सलिलादुत्पतन्तस्सन्तु इति ॥ तदात्वष्टावक्रः सरोषसंभृताक्षरमवादीत् राजानं ॥

**नानेन जीवता कश्चिदर्थो मे वंदिना नृप ।**
**पिता यत्रस्य वरुणो मज्जयैनं जलाशये** ॥ इति ॥

तदा वन्द्यपि आत्मनः बरुणपुत्रतां प्रचिकटयिषुरित्थं वदतिस्म ॥

**अहं पुत्रो वरुणस्योतराज्ञः न मे भयं विद्यते मज्जितस्य ।**
**इमणुहूर्तं पितरं द्रक्ष्यतेऽयं अष्टावक्राश्चिरनष्टं कहोळम्** ॥ इति ॥

राज्ञा चन्द्रद्युम्निना अष्टावक्राशय मनुरुन्धानेन वंदीमज्जनविधौ नियुक्तः अवगाह्यान्तिकसरसि ममज्ज ॥ उदतिष्ठच्च हाहाशब्दः महान् पर्यन्तास्थितिजुषां ॥

तदानीञ्च सरिति सरसि च तरंगाणां प्रकाराः बहुधा चलाचला अदृश्यंत ॥ ततः क्षोभात् केचन जातरूपपरिष्कृतोत्तरीयपटधारिणः केचित् अभिरूपसौंदर्यशोभावितानाः विख्यातवैडूर्यमणिमालाप्रमाधितग्रैवेयकाः अपरेच दुर्वहसुवर्णभार परिपीडित शिरोभागाः खलतिप्रायाः अन्येचान्तेवासिशतसमाहृतोपदासंभाराः अनवरताध्ययनलालसाश्च बहवः पलिताशिरसः प्रवेपमानगात्राः परमवृद्धाः प्रादुरासन् । तेषांमध्ये पुत्रस्याष्टावक्रस्य निस्तुलं यशोवितानं विद्यासुप्रख्याप्यमानं सप्रमोदमभिनन्दयन् स्वशापानुविधायिनाऽऽकारेणानुमाय अपत्यस्यान्तिकभुवं यावदाजगाम तावदेव कहोडे खादच्युतपुष्पनिकरः । सन्निहितास्सर्वेपिसद्वचरिताः दिष्ट्या प्रशशंसुरेनं कहोडं कल्याणमतिना कल्येन पुत्रेण कलितसंसर्गं । मैथिलश्च महाराजः यथोचितमुपचारेण संपूज्य कहोडं अष्टावक्रञ्चाभिष्टुत्य अपत्यस्यावश्यकतां तदीयम्महिमानञ्च बहुधावर्णयामास ॥ तदा कहोडोपिपुत्रस्य अष्टधावक्रिमणि हेतुं, स्वस्य तत्कृतमुपकारञ्च, विस्तरशो निरूप्य आत्मीयमपि वृत्तं, औद्दालकस्यानुग्रहञ्च, बहुधाप्रख्याप्य निरवधिमानन्दसागरं पुनरपि अवगाह्यान्तर्मज्जन्नेवानुबभूव सम्मोदं । वन्द्यपि मुनिकुमारसौहृदय्यसंपिपादयिषया जनकस्य निर्विवेदयिषया कहोडापराधपरिजिहीर्षया विद्वत्समागम-

सिसेविषयावा पुनरपि सलिलादुत्थाय सभामध्यमुपगम्य अष्टावक्रमालिंग्य जातो भवान्मेंगुळिप्रणयी मर्यादातिलंघीन्यपि वचनानि विस्मर्यंतां आर्य कहोड पितुर्निदेशेन कृतं । न ममापराधो भवतो मज्जनविधौ ॥ मैथिल उक्थ्यं साम गीयते । सन्निहितश्च कालो होमविशेषस्य । तादियं सभा समाप्यतामित्युक्त्वा उत्तिष्ठति वंदिनि सर्वेषुच सभास्तारेषु राजा सविनयं क्रियासमभिहारेण एवं समागन्तव्यमिति प्रार्थ्य पर्याप्तं भूषणं धनंच प्रदाय प्रस्थापयामास तान् ॥

तदा अष्टावक्रोपि सह पित्रा वंदित्वा वंदनीयान् समाघ्राय सवयसः समालिंग्य अनुजप्रायान् वंदिनंच विधाय तुष्टं मैथिलमापृच्छ्य यथागतं पन्थानमवागाहत ॥ सामाजिकाश्च वंदिप्रभृतयो विशिष्यमुनिकुमारं परिणूय यथास्वमुपजग्मुरावसथं । तौच त्वरितयागत्या औद्दालकाश्रममवापतुः । दूरादेवानयोः पितापुत्रयोरागमनंविदन्तो वटवोविद्यार्थिनः विज्ञापयमामुरौद्दालकिं श्वेतकेतुं तत्पितरं कहोळपत्नींच । उद्दालकश्च साश्रुभ्यां लोचनाभ्यामतीवोपोषिताभ्यामिव एतौ चिरेण पपौ । श्वेतकेतुरपि समालिंग्य कहोडं इयतः कालस्य कौशलं सर्वविषयेष्व पृच्छत् । अन्तिकाश्रमस्थास्सर्वेपि संभूय नवाभ्युत्थितमिव चकोरपरिषत्समाराधनचुंचुं पीयूषकिरणं अनभ्रामिव वृष्टिं राहुग्रसनविमुक्तमिव रविमण्डलं अरण्यादुपावृत्तमिव रघुनन्दनं सावित्रीसमुज्जीवितमिव सत्यवन्तं तमक्षिभ्यामापीयाति जहृषुः ॥

एतावपि क्वचिज्जरतीभिस्सनीराजनमभिपूजितौ अपरत्र कुशलप्रश्नसमुद्यतपीवरबाहुभिः प्रवृद्धैः उच्यमानाशिषौ उन्नमितकन्धरैर्वामनैश्चान्तेवासिभिरविमुक्तपार्श्वौ सन्तोषभरेण क्षीरोदमिवावनितलं प्रापयन्तौ साधुवादप्राचुर्येण सुधापूरमिवाप्लावयन्तौ अतिचिरान्तर्हितदर्शनेन सारस्वतीं रीतिमिव सन्दर्शयन्तौ आलापमाधुर्येण आनन्दोदधिमिवाविर्भावयन्तौ आकलितफलतया भगीरथप्रभावमिव प्रस्फोरयन्तौ पराजितवंदितया नारसिंहमिव विक्रमं व्याख्यान्तौ निमग्नोद्धरणलीलया वाराहीमिव पद्धतिमनुबोधयन्तौ आश्रममाजग्मतुः ॥

तदाश्रमपदञ्च पलितशिरसां परिमण्डलेन श्वेतमयमिव पल्लवमयमिव पिप्पृच्छिषासमागतैर्वटुनिकरैः समुद्रमयमिवानन्दाश्रुपूरैः सितकिरणमयमिव प्रहसनप्रभावितानैः ज्ञानमयमिव वाङ्मयविशेषप्रवचनैः धर्ममयमिव तात्कालिकाभिवादनादिभिस्समयाचारैः शब्दमयमिव स्वागतवचनैः भावुकमयमिव आशीर्वचननिकरैः प्रमोदमयमिव प्रहृष्टजनताभिः प्रकाशते स्म ॥ इत्थमाश्रममुपागतं सपुत्रञ्च कहोडं दूरादेवावसथादवलोक्य जातहर्षापि चिरविरहजं तानिमानमंगकैरभिदधती एकवर्णाभूतकेश्या झटिति समुद्गताश्रुप्रसरा असंस्कृतौष्ठपुटा परिधूसरवसना पाण्डिमपर्याप्तभूषणा मूर्तिमतीव पातिव्रत्यपरिपाटी सशरीरेव तपोवितातिः साकृतिरिव साधुता सतनुरिवातनुधर्मानुष्ठितिः क्षामकपोला परिमितकथा कहोडपत्नी च अन्तरागतं अवदातावलोकनैः साधुसंभावयन्ती अनक्षरमावेदयन्ती आत्मनानुभूतानां दुःखसन्ततीनां परिपाकं, अह्नायापत्यमष्टावक्रं द्वारागतमेव बलादाकृष्य मूर्ध्नि समुपाघ्राय गण्डफलकेच चुंबन्ती बाहुभ्यां गाढं परिष्वजमाना "त्वया खलु पुत्रवती" इति साधुवादान् वदन्ती चिरमविहायापत्यमस्थात् ॥ अन्तःप्रविष्टञ्च कहोडं अनभ्यस्तभ्रूविलासेन केवलं साश्रुणा लोचनेनात्मदैन्याविर्भावसूचकेनाघ्नतीव सा प्राप्तबाधम्य भर्तुर्वीक्षणेन दुःखयन्ती जितकाशिपुत्रसमागमेन तुष्यन्ती वसन्तोदयमाधवीलतेव शोच्यां प्रियदर्शनाञ्च पर्यायेण दशामश्नुवाना आसीत् ॥ इत्थं समागतानां तेषां प्रवृद्धे हर्षप्राग्भारे कहोडोपि तत्कालोचितान् सल्लापान् परिसमाप्य अपत्यमष्टावक्रमाहूय इत्थमुक्तवान् ॥ "भवता गर्भगतेन शिक्षितः कोपितश्चाहमशपमंगानामष्टधावक्रिमाणं । संप्रति तु अमुष्यां समंगायां स्नाहि । वपुषः कौटिल्यं वीचीकौटिल्येनापयास्यति । मा चिरय । वंदिविजयेनेव वपुस्सौभाग्येनापि विराजिष्यते इति ॥

तदनु यथापितृनियोगमाचचार स्नानमष्टावक्रः । स्नातोत्थितश्च पूर्णचन्द्र इव विधूतवक्रिमा विरराज ॥ समंगाचात्मनः अन्वर्थतामवाप्य परमां प्रहृष्टतामवबोधयितुकामेवापांपतिं ससंभ्रममगात् ॥

एवमेते मिळित्वा विहाय विषादं प्रहाय पाण्डित्यदौर्गत्यं अवाप्या-तुलां समृद्धिं अनुभूयाश्रमदुर्लभानि सुखानि अनवरताध्यापनाध्वरदीक्षाः औपनिषदार्थविश्राणनविख्याताः समंगातीरालंकाराः समाः परस्सहस्रं यापयन्तोऽशिक्षयन् लौकिकीं वैदिकीञ्च वृत्ति मवनौ ॥



# शुद्धाशुद्ध सूचिका ।

| पृष्टं | पङ्क्तिः | अशुद्धानि. | शुद्धानि. |
|---|---|---|---|
| १ | २ | सेवितः | सेवितः |
| २ | ८ | राजविजयस्य | राजमथनस्य |
| ३ | २ | भरितैः | भरितैस्तटागैरुपशोभितः |
| | ४ | तरु, | तरुभिश्च |
| ५ | ९ | हायन्याकन्यया | हायन्यानुजया |
| ६ | ११ | विमाग | विभाग |
| ७ | १९ | खिद्यति | खिद्यते |
| | २१ | णामन | णामेन |
| | २२ | सदा | अमुंखलुसदा |
| ८ | २० | काले | सतिकाले |
| ९ | ६ | उपानही | उपानहौ |
| | | श्चचार्यः | श्चाचार्यः |
| १० | २ | मुरंप | मुरंकमपिप |
| | ९ | तेजञ्चः | तेजःपुञ्जः |
| | २० | पालन्नृ | पालयन्नृ |
| १२ | ६ | विधिप्र | विधियथानियोगश्चप्र |
| १३ | ५ | ददृक्ष | दिदृक्ष |
| १४ | ४ | विधिः | विधिः इत्थमवदंचगप्याह |
| | २२ | मृमङ्ग | ममङ्ग |
| १६ | १४ | मुमङ्ग | समङ्ग |
| | १८ | यद्गुण | यद्गुण |
| १७ | १ | मुमङ्ग | ममङ्ग |
| | ५ | पिण्डानकानि | पिण्डकान् |
| | १२ | मिश्च | मिश्च |
| | २२ | वन्य | वन्य |

| पृष्टं | पङ्क्तिः | अशुद्धानि. | शुद्धानि. |
|---|---|---|---|
| १८ | २ | चार्याणी | चार्यानी |
| | १६ | चार्याणी | चार्यानी |
| | २४ | समीधः | समिधः |
| १९ | १ | गन्तुं | गमयितुं |
| | ३ | कौशिकीं | कैशिकीं |
| | ४ | ललालाटिकं | लालाटिकं |
| | १३ | संमिळन्ती | संमिळन्ती |
| | १९ | कल्याणी | सत्यवती |
| २० | १७ | जाया | जायां |
| | १९ | कल्याणी | कल्याणिनी |
| २३ | १२ | क्षिस्थाना | क्षिस्थेना |
| | १९ | खिद्यन्ती | खिद्यमाना |
| २४ | १ | कठोग | कठोरग |
| २५ | ५ | जनानि | जनानिच |
| | १३ | वतिनी | वर्तिनी |
| | २२ | वधीर | वधीर |
| २६ | २४ | सर्वया | सर्वधा |
| २९ | १२ | मुच्छित | मुचित |
| ३० | १० | स्वस्य | स्वास्य |
| | १८ | पन्थाः | पन्था |
| ३१ | १० | जितं | मितं |
| ३२ | ४ | रिणः | रिणस्तु |
| | ५ | श्वेत | च्छ्वेत |
| | १० | कमुद्यमंसाधु | क उद्यमःसाधु |
| | १३ | तरान्ति | तरन्तीति |

| पृष्ट | पाङ्क्तिः | अशुद्धानि. | शुद्धानि. |
|---|---|---|---|
| ३३ | १९ | भाघ | भाव |
| ३५ | १० | ड्विवग | ड्विमुपग |
| | २६ | क्रिमिमो | क्रिमो |
| ३९ | ३ | युंक्त | युङ्क्त |
| ४० | ७ | ममुहू | मम्मुहू |
| | १३ | सीन्दर्य | सौंदर्य |